नैवान्यदस्ति शरणं चरणारविन्दा-
　द्गौरीसखस्य सखि दुःखजुषां जनानाम् ।
यत्पद्मदुर्बलमपि स्वयमन्तकस्य
　वक्षो बिभेद दृढमाश्रितरक्षणाय ॥ २ ॥

तारापतीन्सुदति पश्य पिनाकपाणेः
　पूर्णानिमान्पदमुपेत्य नखच्छलेन ।
अस्यायमङ्घ्रिकमलाश्रयहानिदोषा-
　दद्यापि हन्त कृश एव कपर्दचन्द्रः ॥ ३ ॥

जङ्घायुगं सखि विलोकय भूतभर्तुः
　संवाहनेषु गिरिजाकरपल्लवेन ।
संजातकण्टकतया प्रतिपद्यतेयन्-
　नित्यं पदाम्बुरुहकोमलनालकक्ष्याम् ॥ ४ ॥

कक्षोरगेन्द्रमिह पश्य विभोस्तमेन-
　मावेष्टनेन विपुले कलितं नितम्बे ।
येनायमद्य लभते वरसुन्दरीणां
　चित्ताम्बुराशिमथने सखि मन्दरत्वम् ॥ ५ ॥

नाथस्य सुन्दरि विलोकय नाभिगर्त-
　मस्योत्तमाङ्गकलिता विबुधस्रवन्ती ।
आवर्तमाशु विरचय्य पुनःपुनस्तं
　यत्साम्यदुर्लभतया शिथिलीकरोति ॥ ६ ॥

अङ्गीकृतं यदमुना वसनत्वपक्षे
　कक्षोरगेन्द्रफणरत्नमरीचिशोणम् ।
मातङ्गचर्म चिरकालनिकृत्तमेत-
　दद्यापि पश्य रुधिराक्तमिवावभाति ॥ ७ ॥

नैसर्गिकारुण शालिनि पश्य भिक्षो-
हैरण्यगर्भमयि पाणितले कपालम् ।
आविष्करोत्यरुणतामरसे विनिद्रे
निद्रावशस्तिमितहंसगतामभिख्याम् ॥ ८ ॥

आलेपनं यदिदमस्य भुजान्तराले
तद्भस्म दग्धवपुषो मदनस्य मन्ये ।
नो चेत्कथं कथय वीक्षितमात्र एव
संमोहयेत्सखि मनः सकलाङ्गनानाम् ॥ ९ ॥

गौर्या मनोहरभुजार्पणयोग्य एव
कण्ठे कथं सखि हरस्य भुजङ्गहारः ।
मन्ये तयान्यवनितासुदृढोपगूढ-
साशङ्कया वसति तत्र कृताभ्यनुज्ञः ॥ १० ॥

शीतं निसर्गधवलं हृदये विहाय
हारं भुजङ्गमतिभीषणमेव धत्ते ।
स्वातन्त्र्यभङ्गभयतः प्रभवः कदापि
कुर्वन्ति हन्त न गुणेष्वपि पारतन्त्र्यम् ॥ ११ ॥

हारायितः सखि हरस्य महाभुजङ्गः
पार्श्वस्थितिं मृगदृशां निरुणद्धि भीमः ।
रुन्धे विभुष्वधिकवल्लभतां प्रपद्य
प्रायः पराश्रयणमाशु भुजङ्गवर्गः ॥ १२ ॥

नैल्यं यदस्य गलमूलगतं तदेके
कामं गृणन्तु गरमालि ममैष तर्कः ।

---

१. 'पराश्रयमतीव' इति पाठान्तरम् ।

या कापि सिद्धगुलिकैव मृगेक्षणाना-
माश्लेषकौतुकविधाननिरूढशक्तिः ॥ १३ ॥
यो मूर्ध्नि मुग्धशशिभङ्गभयेन सोढा
पार्थस्य निर्घृणशरासनताडनानि ।
यो वा करोत्युभयदानमपायकाले
तं पश्य दक्षिणकरं सखि शंकरस्य ॥ १४ ॥
साकूतमन्दहसितोदयलोभनीया-
दास्यादिहास्य सखि संप्रति निर्गतानि ।
देहीति लोकबहुमानविवर्जितानि
याच्ञाक्षराण्यपि महेश्वरतां ध्वनन्ति ॥ १५ ॥
आलोकयैतदलिकेक्षणमालि शंभो-
र्निर्हेतुनिह्नुतमनोभवरम्यदेहम् ।
सर्वेषु जन्तुषु विभुः समदर्शनोऽपि
शाठ्येन यस्य विषमेक्षण एव जातः ॥ १६ ॥
सत्यार्थमेव खलु तद्यदिहाद्भुतस्य
पात्रं भुजङ्गपरिरक्षितमाहुरार्याः ।
पश्याम्बिकाकलवचोमृतपात्रभूते
कर्णेऽपि कुण्डलभुजङ्गपरिष्क्रियास्य ॥ १७ ॥
फा(भा)लेक्षणान्तिकचरं सखि पश्य शंभो-
श्चूडाशशाङ्कमतिम(क)र्शितगात्रमेनम् ।
स्वप्रेमबन्धुमदनप्लुषि हव्यवाहे
त्यक्तुं निजामिव तनुं विहितव्यवसायम् ॥ १८ ॥

---

१. 'निर्घृणशरासन' इति पाठान्तरम् ।

नासीरपूरणविधौ मकरध्वजस्य
चक्रुर्वचांसि सुलभानि च यानि नार्यः ।
तानीन्दुशेखरभव मदनावमानं
सद्यो ममार्जुरपि तस्य वपुः पुरारेः ॥ १९ ॥

सत्यं समाश्रितजनो बहुमानलाभे
नाप्राप्तवाञ्छितफलोऽपि विभुं जहाति ।
पश्येन्दुरेष कुरुते शिरसा धृतोऽस्मी-
त्येतावता पशुपतेः कृश एव सेवाम् ॥ २० ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्येऽङ्गवर्णनपद्धतिः सप्तमी ।

---

अष्टमी पद्धतिः ।

गौर्याः समक्षमपि यस्य विभोर्विकारं
कर्तुं कथंचिदपि नालमभून्मनोभूः ।
तस्यैव चित्तमपहर्तुमहो विलासा
नानाविधा नगरवामदृशां बभूवुः ॥ १ ॥

पुष्पं कराञ्जलिधृतं चलदुत्तरीया
चिक्षेप कापि पुरतः स्मरशासनस्य ।
एतावदद्य मयि पुष्पशरेण मुक्तं
पश्यास्त्रजालमिति शंसितुमुद्यतेव ॥ २ ॥

आविश्चिकीर्षुरतुलं निजबाहुमूलं
कन्दर्पमूलधनगाश(शि)तुरस्र एव ।
काचिद्विलोलवलयावलिना करेण
नेत्रान्तिकादलकभारमपाकरोत् ॥ ३ ॥

एका त्रपापरिभवासकलप्रवृत्ति
　　र्चिक्षेप दृष्टिमबला नवचन्द्रचूडे ।
प्रायेण तिष्ठति विदग्धविलासिनीना-
　　मर्धेक्षितेषु मदनः परिपूर्ण एव ॥ ४ ॥

काचिद्विलासचतुरं कतिचित्पदानि
　　शंभोर्जगाम पुरतो मदमन्थरैव ।
तां वीक्ष्य तादृशगतिं विशिखैः किमन्य-
　　दात्मन्यपि स्वयमभून्मदनः प्रहर्ता ॥ ५ ॥

कंदर्पशत्रुरयमित्यनुरूपयन्ती
　　सैषा पपात पुर एव पुरां विजेतुः ॥
इत्यात्मदोषमपरत्र निपात्य काचि-
　　त्काञ्चीमहो गुणवतीमपरा निनिन्द ॥ ६ ॥

प्राप्ता स्वगेहमाणेतोरणदण्डमेका
　　रथ्यागतत्रिपुरवैरिविलोकनाय ।
किं स्थाणुसंश्रयणमिष्टमिति ब्रुवाणां
　　पाणिस्थकेलिकमलेन सखीं जघान ॥ ७ ॥

किं ब्रह्मणो हननमेव तपोऽङ्गमेव किं
　　ते विरक्तिरबलासु वशीक्रियेयम् ।
किं पावनी शवशिरःस्रगिति स्मरार्तै-
　　रानर्च कापि गिरिशं वचनप्रसूनैः ॥ ८ ॥

व्यालोलकेशकलितेन करेण काचित्का-
　　ञ्चीगुणश्लथनदर्शितनाभिमूला ।

---

१. 'विलासललितं' इति पाठान्तरम् ।　　२. 'स्थाणुं गतासि तव भद्रमिति ब्रुवाणां' इति पाठान्तरम् ।

वक्षस्यभीष्टदयिताकुचमुद्रितोऽपि
　　योगी किलेति गिरिशं कुटिलं ददर्श ॥ ९ ॥
काचित्पुरा प्रणतिकृत्यमशिक्षितापि
　　गौरीवराय विनयाञ्जलिमाबबन्ध ।
तन्मौलिचन्द्रकिरणैर्मुकुलीकृतेन
　　लीलाम्बुजेन कृततत्प्रवणोपदेशा ॥ १० ॥
हीनाङ्गतोपरतमार्गणमोचनेन
　　प्राचीनवैरकुपितेन मनोभवेन ।
संचोदितेव निशितैर्निखिलेऽपि देहे
　　विव्याध कापि मदनारिमपाङ्गबाणैः ॥ ११ ॥
प्रस्थानवेगशिथिले सति केशपाशे
　　काचित्तथैव गिरिशस्य समीपमाप ।
स्थाने स्मरस्य परिभूतिमपास्य केश-
　　बन्धो विधेय इति बद्धदृढव्रतेव ॥ १२ ॥
येनाकुलेक्षणयुगा तरुणेन्दुमौलि-
　　मान्दोलितेन न विलोकयितुं शशाक ।
लीलाम्बुजेन सहसैव नुनोद काचि-
　　दात्मालकं चलदलिभ्रमवश्यबुद्धिः ॥ १३ ॥
कण्ठे सकौतुकसमर्पितया तदीये
　　वव्रे स्वयं पशुपतिं पतिमेव सद्यः ।
कालाञ्जनप्रणयमेचकया स्वदृष्ट्या
　　नीलोत्पलारचितमालिकयेव काचित् ॥ १४ ॥

१ 'मुकुलायितेन × × × तत्प्रवणोपदेशा' इति पाठान्तरम् ।

वल्ली वधूस्तदधरस्तरुणप्रवाल-
स्तत्रापि निर्मलरुचिस्मितमेव पुष्पम् ।
तस्योद्गमे जनविलोचनभृङ्गसेव्ये
मासो मधुर्मधुसखारिरभूत्क्षणेन ॥ १५ ॥

रथ्योपहारकुसुमस्खलनेन काचि-
त्पादाग्रतोदमभिनीय पुरः पुरारेः ।
आत्मन्यशृङ्खलमनोभवमुच्यमान-
पुष्पास्त्रदुर्विषहतां प्रकटीचकार ॥ १६ ॥

काचित्प्रकोष्ठवलयावलिसंश्रितस्य
लीलाशुकस्य मुखसंक्रमितैर्वचोभिः ।
भिक्षाटनादिलघुकृत्यनिषेधगर्भै-
र्मन्दस्मितोत्तरमयुग्मदृशं चकार ॥ १७ ॥

द्वारि स्थितस्फटिकतोरणदीर्घदण्डं
तुङ्गस्तनाग्रयुगलेन निपीडयन्ती ।
मन्दस्मितानुमितचित्तनिगूढभावा
काचिन्मुहुर्मुहुरवैक्षत चन्द्रमौलिम् ॥ १८ ॥

कस्याश्चिदीशपदवन्दनलालसाया
नासीद्दिवा मुकुलितं करपद्ममेव ।
चूडाशशाङ्ककिरणैः परिभूयमानं
तस्याः करप्रणयकेलिसरोरुहं च ॥ १९ ॥

अह्नाय काचिदनियन्त्रितमेव कृत्वा
वलयश्लथं निकटमीश्वरमाससाद ।

कामायमानं[1]..................सन्त-
नि:शेषनिर्हरणबद्धदृढव्रतेव ॥ २० ॥

काचित्कलक्कणितकङ्कणमञ्जुनादै-
रीशं स्ववीक्षणपरं विदधे विदग्धा।
पुंसां मनोऽभिलषितेषु विलासिनीनां
प्रायेण भूषण रवः प्रथमाभिलाषः ॥ २१ ॥

आचारपुष्पमपरा स्मितपुष्पमिश्र-
मग्रे विभोः क्षणमवाकिरदानमन्ती।
लालाटलोचनकृशानुभयादुपात्त-
रूपान्तरेव कुसुमायुधचापयष्टिः ॥ २२ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये विलासपद्धतिरष्टमी।

---

नवमी पद्धतिः।

तैस्तैर्विलासचरितैर्विकृतं न वेति
चित्तं परीक्षितुमयुग्मविलोचनस्य।
यान्यूचिरे युवतयो वचनानि सार्धं
तस्योत्तरैरनुगुणैः कथयामि तानि ॥ १ ॥

सख्यं वरेण्यघटितं द्रविणेश्वरेण
कार्श्यं[2] तथापि किमिदं तव नापयातम्।
किंत्वेष सुन्दरि चिराय पयोधरेण
स्फीतेन ते परिचितः कृश एव मध्यः ॥ २ ॥

---

१. अत्र पाठो न दृश्यते. २. कार्श्यं निःसारत्वम्.

सर्वेषु जन्तुषु समं कथमिन्दुमौले
　त्वामेव हन्तु विषमेक्षणमाह लोकः ।
मध्यः कृशोऽपि वहति स्तनयोर्भरं ते
　तस्मिन्वहत्यपि च मध्यमवाद एव ॥ ३ ॥
दोषं विनैव भवता तरुणेन्दुमौले
　कस्मात्पुरा विनिहतः करियूथनाथः ।
त्वत्पीवरस्तननिराकृतकुम्भकान्ति-
　र्जीवन्मृतो मयि वराङ्गि मृषापवादः ॥ ४ ॥
आद्यन्तशून्यइति वेदविदो वदन्ति
　त्वामिन्दुशेखर जगत्युदयान्तभाजि ।
तद्वादमात्रमयमद्य हि दृष्ट एव
　सर्वैश्चकोरनयने तव मध्यलोपः ॥ ५ ॥
उत्पाद्य पावकमयं नयनं ललाटे
　प्लुष्टस्त्वया किमिति शंकर पुष्पकेतुः ।
दृष्ट्वैव ते यदयमाप पुनः प्रसूतिं
　तच्चण्डि हास्यपदमस्म्यहमेव जातः ॥ ६ ॥
मुक्तामयः स्फुटमयं रशनागुणो मे
　धिग्धिग्भयंकरभुजङ्गमकल्पितं ते ।
मुक्तामयत्वमुचितं ननु तस्य बाले
　यः सेवते तव नितम्बमजस्रमेव ॥ ७ ॥
पूर्णं विहाय कथमेनमनङ्गशत्रो
　मूर्ध्ना भवान्वहति नित्यकृशं शशाङ्कम् ।
त्वद्वक्त्रकान्तिपरिभूतिमनाकलय्य
　पूर्णोऽधुनाङ्गि वर ... कृशोऽयमिन्दुः ॥ ८ ॥

ये गर्हिता गिरिश तेऽपि भवन्तमेत्य
श्लाघ्या भवन्ति सहसेति सतां प्रवादः ।
रागोऽधरे कुटिलताप्यलके, कृशत्वं
मध्ये, कुचे कठिनता च तथा न किं वा ॥ ९ ॥
वैवस्वतेन दमितः सकलोऽपि लोकः
सोऽपि त्वदीयचरणेन पिनाकपाणे ।
पद्मं शशी जयति भीरु मुखं तवैन-
मेकान्ततो न विजयोऽस्ति पराजयो वा ॥ १० ॥
देहीति वाचि पदमद्य तवेन्दुमौले
चक्षुः पुनर्मृगदृशां मणिमेखलासु ।
पुंसो रसार्द्रहृदयस्य पुरो वधूनां
वाक्ये च चेतसि च कर्मणि चान्यदन्यत् ॥ ११ ॥
एतेन भैक्षचरणेन जगत्कुटुम्ब-
त्राणक्षमा पशुपते किमलाभि पूर्तिः ।
पूर्णो न किं प्रतिदिनं त्वयि भिक्षमाणो
लावण्यमाननगतं प्रतिपच्छशाङ्कः ॥ १२ ॥
अग्रेसरस्त्वमसि नाथ विलासभाजां
भिक्षामटस्यपि कथं त्वमपास्तलज्जः ।
स्वच्छन्दवीक्षणवचांसि पृथग्वधूषु
कर्तुं न भैक्षचरणादपरोऽभ्युपायः ॥ १३ ॥
एतानि नाथ वचनान्यमृतोपमानि
कण्ठादुपात्तगरलादपि निर्गतानि ।
स्वादिष्टता वचसि वक्तृगुणैर्न जातु
श्रोतुर्जनस्य गुण[illegible] ॥ १४ ॥

क्रीडापरः कथमसि त्वमनादिवृद्धो
मुग्धासु भैक्षचरणच्छलतो वधूषु ।
यः संगमो युवतिभिर्जरयातुराणां
तं सूरयो जरणभैक्षजमामनन्ति ॥ १५ ॥

धिक्त्वां भुजङ्गममयस्तव यस्य हारो
मुक्तामयस्तव न किं मम पश्य नाथ ।
मुक्तामयत्वमुचितं ननु तस्य बाले
पीनस्तनेन कृतसंगमनिर्वृतस्य ॥ १६ ॥

अन्यत्र यातमपि मानसमीश किं ते
नैवाददासि बलिमद्य नच प्रयासि ।
यस्ते गुरुस्तनभरः कलकण्ठि तस्य
तद्दक्षिणीकृतमिदं हृदयं मया ते ॥ १७ ॥

यत्कार्ष्ण्यमीश भवतो मुखपूर्णचन्द्रे
भ्रष्टं तदेव गणयामि गलस्थमेतत् ।
रागोऽधरे सुदति यः स तवाननेन्दो-
राभासि(त्ति) संचित द्वयोर्द्वयशोणभावः ॥ १८ ॥

मध्यस्थमीश कथयन्त्यखिला भवन्तं
कस्मादकारि भवता स्मरदेहदाहः ।
पुंसां करोति मदिराक्षि नितान्तपीडां
मध्यस्थमेव कथमद्य वलित्रयं ते ॥ १९ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्य उत्तरप्रत्युत्तरपद्धतिर्नवमी ।



१. 'कथयन्ति जना भवन्तं' इति पाठान्तरम् ।

दशमी पद्धतिः ।

प्रत्यालयं कृपणवज्जगतामधीशे
देहीति दीनपदवादिनि भिक्षमाणे ।
वामभ्रुवां मनसिजावशमानसानां
भिक्षाप्रदानचरितान्युपलालयामः ॥ १ ॥

काचित्पुरः पुररिपोरतिसंभ्रमेण
भिक्षामपात्रपतितामवबुध्य सद्यः ।
अन्तर्भयेन निदधे हृदये कराग्रं
भिक्षाहमस्मि भवतो भगवन्नितीव ॥ २ ॥

प्रेम्णापि याचितनिदानविरोधिता तु
दर्वीं दधत्यपि करेण समृद्धसिद्धाम् ।
भैक्षाटणा(ना)न्तमपरा गिरिशेन योगा-
न्निश्चित्य कालहरणं कपटैश्चकार ॥ ३ ॥

सत्पात्रदानविधिना यदनेन पुण्यं
तन्मे तवैव कृशभावमपाकरोतु ।
इत्येवमिन्दुशकलाभरणाय काचि-
द्भैक्षेण पुण्यमपि दानभवं दिदेश ॥ ४ ॥

आदातुमैच्छदधिकं गिरिशो न भैक्षं
पात्रं वधूः सपदि पूर्णमियेष कर्तुम् ।
आयस्तयोर्युवतिशंकरयोर्नव
भिक्षाप्रदानसमये सुचिरं विवादः ॥ ५ ॥

दर्व्याः परिच्युतमिदं तमियं च हस्ता-
द्वा[illegible]द्वयं तदपि दुर्लभम[illegible] ।

अश्रान्तमेव गिरिशान्तरपल्लवेन
    कस्याश्चिदायतदृशः सितपुष्पकेण ॥ ६ ॥
आयाहि तिष्ठ जहि भीमभुजङ्गहार-
    मेनं गलात्तदनु भैक्षमिदं गृहाण ।
इत्येवमीश्वरमपेक्षितभैक्षदाना-
    त्प्रागेव कापि निजकिंकरतां निनाय ॥ ७ ॥
एका कथंचन चिरेण विनम्रवक्त्रा
    लज्जावशेन गिरिशाय दिदेश भिक्षाम् ।
दानोन्मुखस्य च गुणाभ्यधिके निकृष्टे
    याच्ञापरस्य च समस्त्रपया विकारः ॥ ८ ॥
धिग्याचनं जगति सन्निहितावमानं
    भैक्ष्यं प्रदेयमिदमर्थयते महेशः ।
कामद्रुहे न खलु देयमिति स्ववाचा
    प्रत्यादिदेश पुर एव हि तस्य काचित् ॥ ९ ॥
यो भिक्षते प्रतिगृहं भुवनेश्वरोऽपि
    तस्मै च या सकरुणेव ददाति भिक्षाम् ।
तावन्ववेक्ष्य गिरिशं [च] सखीं च काचि-
    त्तामेव सर्वसहतां जगते जगर्हे ॥ १० ॥
दर्वीमुखं द्रुतगतिच्युतसिक्थमेव
    काचिन्मुधैव निदधे हरभैक्ष्यपात्रे ।
तस्याः पुनः परिहृतो झटिति प्रकोष्ठा-
    द्भिक्षाकपालपतितैर्वलयैः प्रमादः ॥ ११ ॥
भिक्षां प्रदातुमपरा शमनान्तकस्य
    प्रेमादुपान्तमुपसृत्य बभूव तूष्णीम् ।



७ द्वादशगु०

दानादधःकृततदीयकरारविन्दा-
च्छ्लाघ्यं विभुद्य(बुध्य) जनशोच्यमदानमेव ॥ १२ ॥
आहूत एव चरितो विधृतान्नदर्व्या
भिक्षुः कयापि गिरिशो न कृतः कृतार्थः ।
दोषावरन्नि(रं नि)रवधेर्विरहासहिष्णोः
स्नेहस्य किंचिदपि चारुदृशो न तस्याः ॥ १३ ॥
भिक्षां प्रदातुमभिवाञ्छ्य पुमानमुष्मै
कङ्कालवेष इति बन्धुविबोधितापि[1] ।
नैव न्यवर्तत वि(व)धूः शिवभैक्ष्य(क्ष)दाना-
द्धर्मात्मना परिणतो ननु काम एव ॥ १४ ॥
यावन्न निर्गलति देहिवचोऽस्य वक्त्रा-
त्तावद्ददौ झटिति काऽपि शिवाय भैक्षम् ।
देहीति दीनपदनिर्गमयत्नमूल्यं
नालं जगत्त्रितयमर्थिजनाय दत्तम् ॥ १५ ॥
यो दक्षिणः पुरजितो वितताार भिक्षां
कस्याश्चिदाशु वलयैः स करो विहीनः ।
हा हन्त दैवतमतिक्रमकारि वामः
संरक्षितो वलयवान्मलिनालकायाः ॥ १६ ॥
भिक्षोदने स्खलनिपातिनि कापि शंभोः
पात्रं न सम्यगिति पाणिगतं जगर्हे ।
आत्मीयदुष्करणहेतुक एव मर्त्यैः
सर्वैर्विधेः शिरसि पात्यत एव दोषः ॥ १७ ॥

---

1. 'बुद्धिविबोधितापि' इति पाठान्तरम् ।

मा गच्छ शंभुमिति मातृनिवारितापि
　　भिक्षाप्रदानमपदिश्य जगाम काचित् ।
धर्मप्रतीपगतिरप्यभवत्तदानी-
　　मालम्बनं मनसिजस्य विचित्रमेतत् ॥ १८ ॥

काचित्करेण दधती गुरुभैक्षगर्भां
　　दर्वीमियाय हरपार्श्वभुवं न यावत् ।
स्नेहोज्ज्वलां मनसिजः स्वयमन्न भिक्षां
　　तामेव तावददिशत्परमेश्वराय ॥ १९ ॥

पात्रोत्तमस्त्वमसि नायक पाणिलग्नं
　　पात्रं तथापि न पवित्रमिदं कपालम् ।
यावन्न तत्त्यजसि नैव ददामि ताव
　　दित्येव कापि गिरिशाय ददौ न भिक्षाम् ॥ २० ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये भिक्षाप्रदानपद्धतिर्दशमी ।

---

एकादशी पद्धतिः ।

भिक्षाप्रदानसमये वनिताजनस्य
　　जातानि शंभुमधिकृत्य वचांसि यानि ।
तस्योत्तराण्यपि च यानि नयान्वितानि
　　वक्ष्यामि तानि विदुषां श्रवणोत्सवाय ॥ १ ॥

भिक्षाटनादिकममङ्गलचेष्टितं ते
　　किं नाम सापि सहते गिरिराजपुत्री ।
यं यं करोत्यविनयं जगतीह भर्ता
　　साध्वी वधूर्गुणमिव हि तस्य तस्य ॥ २ ॥

भिक्षाटनं यदि न ते विहृतिप्रवृत्तं
याचस्व भूरि पुरशासन मैव भैक्षम् ।
लोकेऽत्र लोभबहुले मितमेव याच्यं
तावानलाभसमये भविता विषादः ॥ ३ ॥

भिक्षान्नसाध्यमभिधेहि पिनाकपाणे
रुच्यांवहं तव तदेव हि कालकूटम् ।
यद्याचितं कृशजनेन तदाशु देयं
दात्रा कथं चिदपि नास्य फलं विचार्यम् ॥ ४ ॥

अस्त्येव ते प्रियसखः शिव वित्तनाथः
तस्मिन्स्थितेऽपि किमियं तव भैक्षयाञ्चा ।
वित्तान्धदुर्मुखनिरीक्षणभीतिभाजां
भिक्षा वरं प्रति निकेतमदैन्यलभ्या ॥ ५ ॥

सर्वाः कला वदनतो भवतः प्रवृत्ताः
किं तासु काचिदपि नाथ न पोषहेतुः ।
अन्यैव कापि धनिनां द्रविणात्मिका श्री-
र्विद्यात्मिकापि विदुषामपरैव लक्ष्मीः ॥ ६ ॥

कंचिन्मुहूर्त्तमिह तिष्ठ विभो मदीयं
गेहं प्रविश्य पुनरेत्य ददामि भिक्षाम् ।
अभ्यर्थिनामभिमतस्य चिरेण लाभा-
दभ्यर्हितः सपदि नास्ति पदस्य लाभः ॥ ७ ॥

तां तां समृद्धिममरा भवतो लभन्ते
भिक्षाटनव्यसनमीश किमर्थमेतत् ।

---

१. 'रुच्याशनं जगति ते गरलं प्रसिद्धम् ।' इति पाठान्तरम् । २. 'त्वाम-
हराद्यकवयो निलयं कलानां' इति पाठान्तरम् ।

नीचैः कदाचन समस्थितिरन्यदोच्चै-
रप्येकदा भवति देहभृतामवस्था ॥ ८ ॥

यत्केवलं तव कराग्रकरोटिपात्र-
मद्याप्यलाभि भवता न किमग्रभैक्षम् ।
उत्साहसंततिकृतामपि देहभाजां
लाभो न यत्नमनुधावति भाग्यतन्त्रः ॥ ९ ॥

मागाः परत्र भवने भव पात्रमद्य
भिक्षोदनैरहमिदं तव पूरयामि ।
वाचं मुधा कुसुमितां विदधाति लोकः
किंचित्त्वसौ फलति नार्थिषु दीर्घतोऽपि ॥ १० ॥

संपन्नमन्नमखिलेश्वर भैक्षमात्रं
तुभ्यं प्रदातुमियदेतदपत्रपेऽहम् ।
निर्णीतमेतदखिलार्थिजनेन दाने
देयस्य काललघुता लंघुतां क्षिणोति ॥ ११ ॥

भैक्षार्थिना प्रतिगृहं चरता त्वयैव
न स्थीयते किमिति हन्त मुहूर्तमात्रम् ।
एकत्र पुष्कलमलब्धवतां स्वकाम्यं
क्वापि स्थितिर्मधुलिहामिव दुर्लभैव ॥ १२ ॥

दास्यामि भैक्ष्यमखिलेश दिने परस्मिं-
स्तुभ्यं हतेन विधिना गलितोऽन्नकालः ।
संप्रीयतां स खलु नाम तयात्वदुक्त्या
यः स्वात्मनः स्थिरमतित्वमिहातनोति ॥ १३ ॥

---

१. 'लघुतां करोति' इति पाठान्तरम् । २. 'धत्ते स्थिरत्वमतिमात्मनि यः भूयाङ्क्षाभ्यर्थलाभमुदितो न तथाहमस्मि ॥' इति पाठान्तरम् ।

कालात्ययेऽद्य भवता गृहमागतं मे
नास्त्येव भैक्षमखिलेश किमत्र कृत्यम् ।
नास्तीति यो वदति भिक्षुसमक्षमेव
सद्भावमात्मनि निषेधति नैव देये ॥ १४ ॥
अप्रापणे वदनमेति यथा विकासं
भैक्षस्य नैव हि तथा तव तस्य लाभे ।
वाञ्छाम्यलभमहमायतलोचनाभ्यः
सद्यो वियोगविपदाहत एव लाभः ॥ १५ ॥
स्वामिन्मया पुरत एव विखण्डिताशो
भूयोऽपि मां किमनुधावसि भैक्षकामी ।
भृङ्गः पुरा मुकुलनेन विमोघकामः
पुष्पं न किं पुनरुपैति विकासकाङ्क्षी ॥ १६ ॥
तुभ्यं ददामि कथमद्य वरेण्य भिक्षां
तां स्वीकरोति कथमेव भवानलज्जः ।
दाता यथारुचि ददात्यमितं मितं वा
गृह्णाति वस्तु मितमप्यगतिर्दरिद्रः ॥ १७ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये दीनोक्तिपद्धतिरेकादशी ।

---

## द्वादशीपद्धतिः ।

बध्नाति मे प्रथमवैरिणि पक्षपात-
मेवं जनोऽयमिति जातरुषा स्मरेण ।
निःशङ्कविद्धहृदयस्य वधूजनस्य
यत्पारवश्यचरितं तदुदीरयामि ॥ १ ॥

भूतैः किमन्तिकचरैः सहसा गृहीता
　दष्टा शरीरकलितैरुत पन्नगेन्द्रैः ।
क्रा(क्रा)न्ता त्रिदस्य गलकालगरोष्मणेति
　काचिच्छिवस्य पथि संदिदिहे सखीभिः ॥ २ ॥

भूषोरगानविगणय्य विभोरुपान्ते
　कापि स्थितैव निजबन्धुनिवारितापि ।
किं धार्ष्ट्यमेतदुत मौढ्यमहो त्रिदस्या
　भक्तिर्वरा किमु मनोभववैभवं वा ॥ ३ ॥

आलोक्य दृष्टिररुणा प्रथमं मृगाक्ष्या
　गौरीकुचाहतिकिणोरसमिन्दुमौलिम् ।
पश्चादुदश्रुसलिलाभवदग्नितप्ता
　मारस्य दत्तनिशिताश्रुजलेव शक्तिः ॥ ४ ॥

अस्त्रं विमुच्य निखिलं प्रथमप्रयोगे
　भूयोऽपि वेद्धुमबलां विहितोद्यमस्य ।
पुष्पायुधस्य वपुरेव तदीयमेकं
　लक्ष्यं च हन्तशरधिश्च तदा बभूव ॥ ५ ॥

पादेन किं फणिगणे चकितं नितम्बे
　शंभोः करे विवशमग्रसरे सपात्रे ।
आधूसरं भसितलेपिनि बाहुमध्ये
　स्रातुं शिरः सरिति चित्तमधीरदृष्टेः ॥ ६ ॥

काचित्पृथुस्तनभरे गलितोत्तरीये
　व्यत्यासभङ्गिनिहितेन भुजद्वयेन ।
आलिङ्गनं हृदयदेशजुषः शिवस्य
　कर्तुं समीप्सितवतीव चिरं चकाशे ॥ ७ ॥

पुष्पं विकीर्य गिरिशाय पुरैव पश्चा-
त्सर्वो जनो जगति बन्धविमुक्तिमेति
वेणीभरो[1] मृगदृशः प्रथमं विमुक्तो
बन्धात्पुनः पुरजिते कुसुमं मुमोच ॥ ८ ॥
आत्मानुबन्धिरशनागलनाद्यवद्य-
मन्यास्वपि क्षणमवेक्ष्य हराग्र[2] एव ।
काचित्त्रपापरिभवं न ययौ तदानीं
लज्जावहो न खलु जात्यविशेष दोषः ॥ ९ ॥
आलिङ्गनादृतमना गिरिशं विलोक्य
रोमाञ्चकण्टकितमूर्तिरजायतान्या ।
रागेण पुंसि निहिता सुदृशां दृगेव
प्रायेण तत्तदुपभोगसुखं करोति ॥ १० ॥
कस्याश्चिदार्द्रघनचन्दनपङ्किलायां
संवर्धितं स्तनभुवि स्मरकर्षकेण ।
रोमाच(ञ्च)सस्यममितिश्रमवारिसिक्तं
भेदस्तु नाभवदयं खलु दीर्घतन्त्रः ॥ ११ ॥
भिन्नाः स्तनांशुकगुणा हरसंनिधाने
प्रीत्या यदायतदृशो न तदद्भुताय ।
योषिद्गुणा नियमिता विधिनैव तस्या
लज्जादयः सपदि यत्त्रुटिता बभूवुः ॥ १२ ॥
आसीत्परा सपदि तस्य कृतान्तशत्रो-
रालोकनादनिमिषेति किमत्र चित्रम् ।

१. 'वेणीभरस्तु सुदृशः' इति पाठान्तरम् । २. 'पुरः शिवस्य' इति पाठान्तरम् ।

यस्य क्षणस्मरणमात्रवशेन मर्त्या
  यत्नं विनाप्यनिमिषत्वपदं लभन्ते ॥ १३ ॥

च्योतत्सखीवसनरक्षणदत्तहस्ता
  विस्रंसिनि स्ववसने पुरतः पुरारेः ।
अन्यापुनः क्षणमजायत कृत्यमूढा
  नात्मावनेपि गणना पररक्षकाणाम् ॥ १४ ॥

कस्याश्चिदुत्तरदुकूलविलोपदृश्या-
  दाभोगतः कुचयुगस्य विनिर्जगाम ।
अन्तर्गतं झटिति वक्तुमिवेन्दुमौलिं
  रोमाञ्चमन्तिकगताय सखीजनाय ॥ १५ ॥

बन्धश्लथः कचभरः प्रचुराश्रु नेत्रं
  कम्पोत्तरं कुचयुगं गलदुत्तरीयम् ।
विस्रस्तकाञ्चि जघनं चरणं प्रयाणे
  शक्तेतरं मृगदृशो हरदर्शनेन ॥ १६ ॥

हस्तः कयापि गलितांशुकवारणाय
  व्यापारितो वलयविच्युतिदैन्यमाप ।
यत्ने कृते शमयितुं विनिपातमेकं
  हानिं परामपि विधिर्विदधाति वामः ॥ १७ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये पारवश्यपद्धतिर्द्वादशी ।

---

त्रयोदशी पद्धतिः ।

कन्दर्पमुक्तशितबाणपरम्पराभिः
  शंभोः पुरः प्रहतनिघ्नमवेक्ष्य सख्यः ।

नारीजनं निजगदुर्वचनानि यानि
  रम्याणि सन्तु रसिकश्रुतिपारणाय ॥ १ ॥
मुग्धे स्मरार्तिपिशुनं वसनाञ्चलेन
  रोमाञ्चमावृणु पुरः पुरसुन्दरीणाम् ।
लोकः परस्खलनदर्शनदिव्य चक्षु-
  र्जात्यन्ध एव निजदोषनिरीक्षणेषु ॥ २ ॥
यत्पूर्वमात्तविनयाञ्जलिरीशपार्श्वे
  भूयाः सदेति मुहुरालि मयोपदिष्टम् ।
तस्यावधीरणफलं वलयच्युतिस्ते
  क्षेमंकरो भवति किं न शिवे प्रणामः ॥ ३ ॥
स्वैरं विलोकय कृशोदरि कामशत्रुं
  मा भूदयं तव मुखाम्बुरुहे विकासः ।
आविर्भवत्यहिमभासि विकासमात्रा-
  त्प्रेयसीति नलिनीं न किमाह लोकः ॥ ४ ॥
आमीलनेन कमलस्य मधुव्रतानां
  स्वच्छन्दचारविहतिस्त्वयि सान्यथैव ।
फुल्लेऽपि शंकरमुखाम्बुरुहे विलीनः
  शक्तो न गन्तुमपरत्र कटाक्षभृङ्गः ॥ ५ ॥
वासच्यु(श्च्यु)तं तव सखीत्यभिधीयमाना
  नीलं हरस्य गलमूलमिति ब्रवीषि ।
उन्मादिनां जगति नूनमपार्थजल्पा-
  दल्पान्तराणि मदनातुरभाषितानि ॥६ ॥

---

१. 'रम्याणि तानि कथयामि विदन्तु सन्तः ।' इति पाठान्तरम् ।

शंभोः समीपमुपगच्छसि निर्विशङ्कं
मुग्धे मनोभवभवेन मतिभ्रमेण ।
हाराहिमस्य न निरूपयसि क्षुधार्तं
मुग्धं च ते मुखमिदं शशिनिर्विशेषम् ॥ ७ ॥

स्रस्तोत्तरीयमधुना कुचमण्डलं ते
पाहि(णि)द्वयेन पिदधासि यदम्बुजाक्षि ।
तत्साधु संप्रति पुनर्वलयोज्झितस्य
तस्याभिधेहि सखि केन तिरस्क्रियास्तु ॥ ८ ॥

नेत्रद्वयं हरविलोकनलाभधन्यं
सर्वेतरेन्द्रियगता गमितैव शक्तिः ।
स्पर्शं न वेत्सि मुहरङ्गुलिताडितापि
नाह्वानशब्दमपि यत्सखि मे शृणोषि ॥ ९ ॥

सर्वाङ्गवीक्षणमहोत्सवभाग्यहीना
नूनं त्वमस्य गिरिशस्य किमद्य कुर्मः ।
वक्षःस्थले प्रथममस्य दृशं निमग्ना-
मुद्धर्तुमेव निपुणासि न यत्नतोऽपि ॥ १० ॥

नैवाद्य कान्तिविलयो वपुषीश्वरस्य
संकोचनं न तव नेत्रयुगे प्रसङ्गि ।
अन्यः किमद्य सखि पश्यसि रोषरूक्षं
पश्यन्तु ता अपि वृषध्वजमादरेण ॥ ११ ॥

ईर्ष्याकठोरमसकृत्त्वमवेक्षसे कि-
मन्योऽपि तं कमपि पश्यतु भीरुवर्गः ।
मोहेन शंकरविलोकनसंभवेन

श्वासं न किंचिदपि मुञ्चसि कातराक्षि ।
भृङ्गामदीयवरसौरभलोभलोभा-
द्यत्नेन संप्रति तवाननमाश्रयन्ते ॥ १२ ॥

मा मेखलेति मम वा वनमाकलय्य
बद्धा तदाक गलिता मणिमेखला ते
पथ्यं न यः स्वयमवैति जनः स नूनं
पथ्योपदेशमपि हन्तबहिष्करोति ॥ १३ ॥

यो मूढधीः स्वयमयं पुनराप्तवाक्यं
न श्रद्दधीत यदि तस्य विपत्तिरेव ॥ १४ ॥

काञ्चीगुणः पततु काममसौ नितम्बा-
देतानि रत्नवलयानि च बाहुयुग्मात् ।
एतत्तु मे व्यसनमालि सहैव तैस्तै-
र्लज्जामयस्य सहजाभरणस्य पातः ॥ १५ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये पारवश्योक्तिपद्धतिस्त्रयोदशी ।

---

चतुर्दशी पद्धतिः ।

श्लाघ्येन भैक्षचरणेन चिरं विहृत्य
रथ्यासु कालदमने गमनप्रवृत्ते ।
जातानि तस्य पुर एवं नितम्बिनीनां
विश्लेषभीतिकलुषानि(णि) विचेष्टितानि ॥ १ ॥

गन्तुं प्रवृत्तमवलोक्य वृषाङ्कमेका
बालाम्बु नेत्रयुगले प्रचुरं बभार ।

तस्यास्तदीयनयनानि पुनर्विदाहा-
अस्यन्निव क्षणमलक्ष्यत पञ्चबाणः ॥ २ ॥

साकूतमैक्षत हरं मुहुरेव काचि-
द्विश्लेषवन्दननिमीलितपाणिपद्मा ।
संज्ञां सरोरुहनिमीलनयोग्यकाले
भूय स्तदागममपेक्ष्य वितन्वतीव ॥ ३ ॥

मन्दस्मितैरकलितोत्तरमीशमन्या
देहीन्द्रनीलमिति कण्ठगरं ययाचे ।
आगामितं झटिति तीव्रवियोगतापं
तेनैव कर्तुमभिवाञ्छ्य विमूढ बुद्धिः ॥ ४ ॥

काचित्पतिं गतिविषक्तमवेक्ष्य चिह्नैः
कामं तथास्त्वथ च कापि ममास्ति नीतिः ।
एते न मे हृदयगेहमहं प्रविष्टो
मा निर्गमेदिति विलोचनमामिमील ॥ ५ ॥

मा गा इति व्यवसिता गदितुं कयाचि-
त्वह्रा निरोद्धुमपि बाहुयुगार्गलेन ।
नानुष्ठितं गमनकाङ्क्षिणि भूतनाथे
ह्रीयन्त्रणा भवति नैव मनःप्रवृत्तेः ॥ ६ ॥

हस्तान्मम क्वगलितं वलयं[1] न जाने
भिक्षाकपालमिह नायक दर्शयेति ।
काचिच्चकार हरयानमुहूर्तविघ्नं
भिक्षुः शिवोऽपि परिभूतिपदं जगाम ॥ ७ ॥

---

१ [illegible]

वीथीविमोचनकृतव्यवसायमेका
ज्ञात्वा हरं विरहतश्चकिता चकार ।
तत्संनिधावपि निमील्य निमील्य चक्षु-
र्यत्नेन भावितदवीक्षणसाम्यशिक्षाम् ॥ ८ ॥

तावत्त्रपा त्वरितपार्श्वगतिर्मृगाक्ष्या
तावच्छलादसकलानि विलोकितानि ।
वीथीपरिभ्रमणकेलिविपक्षभूतो
यावत्प्रभोर्न गमने जनितोऽभिलाषः ॥ ९ ॥

अन्तर्ज्वरः श्वसितमूर्जितमेव भूयां-
न्गण्डस्थले धवलिमा दृशि बाष्पपूरः ।
जातो हरेण सुदृशो विरहप्रतापा-
त्पूर्वं फलं तदनु हेतुरहो विचित्रम् ॥ १० ॥

काचिन्निरर्गलविनिर्गतबाष्पपूरै-
राशङ्कितं हरवियोगभयं सखीभ्यः ।
दृष्टिर्ममेयमलकच्युतपुष्परेणु-
स्पृष्टेत्यपृष्टवचनैः प्रकटीचकार ॥ ११ ॥

प्रस्थानमिन्दुशकलाभरणस्य काचि-
दासन्नमेव विगणय्य भयेन मुग्धा ।
आदर्शमापातिततत्प्रतिबिम्बहृद्य-
मङ्गेष्वनङ्गविवशेषु मुहुर्न्यधत्त ॥ १२ ॥

भग्नस्य शङ्खवलयस्य ममैतदेक-
मर्धं चिराय मृगये तदिह द्वितीयम् ।
यन्मूर्ध्नि ते कुटिलभास्वरमेतदद्य
संदर्शयेति वनिता गिरिशं ययाचे ॥ १३ ॥

स्वच्छन्दरागरसिकस्य गतिर्वि(गतिं नि)रोद्धुं
शक्तासि ते मलयमारुततुल्यवृत्तेः ।
अस्याः स्मरार्तिरियतीति सखी प्रदर्श्य
प्रस्थायिनं हरमवोचदुपांशु काचित् ॥ १४ ॥

सद्यः प्रयाणकरणोद्यमगम्यमान-
नैरस्यमार्द्रयितुमेव मनस्तदीयम् ।
धेतुः पिनाकिनि मुहुर्मृगलोचनाया
बाष्पोदकान्तरितलोचनवीक्षितानि ॥ १५ ॥

काचित्प्रसक्तगमनं गिरिशं करस्थे
छायाप्रविष्टवपुषा मुकुरे निधाय ।
तं सर्वदा सुलभमेव विबुध्यमाना
नारी वियोगभयविह्वलतां जहास ॥ १६ ॥

लीलाम्बुजे मम रमस्व यथेष्टमस्मि-
न्मा गच्छ षट्पद परिभ्रमणेन किं ते ।
इत्याशु कापि गिरिशस्य गतिप्रसङ्गे
भृङ्गाश्रयं गतिनिषेधवचो जगाद ॥ १७ ॥

आशासमुल्लसितपीनपयोधराग्रा
ताम्राधरस्फुरणदर्शितशक्रगोपा ।
काचिद्बभूव गतिकाङ्क्षिणि नीलकण्ठे
बाष्पाम्बुदुर्दिनमुखी जलदागमश्रीः ॥ १८ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये विश्लेषारम्भपद्धतिश्चतुर्दशी ।

पञ्चदशी पद्धतिः ।

स्था(स्थि)त्वा विभोर्जिगमिषोः पथि कातराक्ष्या-
स्तत्प्रस्थितिक्षणनिवारण[1]कारणानि ।
अप्यल्पिकां विविदिषां सुवहन्त्य एव
प्रश्नात्मिकानि ललितानि वचांसि चक्रुः ॥ १ ॥
स त्वं पुराण कथयेह ममाद्य रूपं
सख्या सहैव चिरकालकृतो विवादः ।
यद्भस्म ते वपुषि तद्भवता गृहीतं
दाहे स्मरस्य किमथो नु पुरत्रयस्य ॥ २ ॥
शङ्कामिमां शमय नाथ पुनर्यथेष्टं
देशं भवान्व्रजतु को नु तदा विरोधः ।
दाक्षायणीपरिणयप्रणयेऽपि किं ते
पाणिः फणीन्द्रपु(प)रुषोऽयमथान्यथा वा ॥ ३ ॥
पृच्छाम्ययं किमपि नाथ भवन्तमेत-
द्ब्रूहि द्वयोरपि तयोरधिकः क एव ।
अन्विष्य यस्तव वराहमलाभखेदो
व्याधाकृतेः सुचिरमस्य च यो भवन्तम् ॥ ४ ॥
स्वामिन्मदीयहृदये चिरकाङ्क्षितोऽयं
कार्यस्त्वया सपदि विप्रतिपत्तिलोपः ।
देहीति यत्पदमथाब्धिभवं विषं वा
जिह्वाग्रदुःसहमुदीरय किं तयोस्ते ॥ ५ ॥

१. 'आत्मीयसंशयनिराकरणापदेशात्' इति पाठान्तरं च तृतीयपा[ठे]
दृश्यते ।

जिज्ञासया हृदयमाकुलितं तथापि
पृच्छामि तत्कथय नायक तथ्यमेव ।
किं ते कपालमनिशं दधतः करस्य
किं वानुगेहमटतश्चरणस्य तोदः ॥ ६ ॥

याचे भवन्तमधुना मधुबन्धुशत्रो
शङ्कामिमां प्रशमयाद्य चिरानुषक्ताम् ।
त्वद्भक्तयोर्वद पुलिन्दमुकुन्दयोस्ते
नेत्रं यदेतदधिकं कतरेण दत्तम् ॥ ७ ॥

अभ्यर्थये भव भवन्तमपाकुरुष्व
दीर्घं विवादमनुयुक्तविबोधनेन ।
का वल्लभा तव हिमालयजह्नुपुत्र्यो-
र्भागेन किं परिणता शिरसा धृता वा ॥ ८ ॥

अस्त्येतया न विहतिर्मचतस्तथापि
संदेहमद्य निरवद्य निराकुरुष्व ।
सर्पैरलंकृतिरियं किमु कान्तिदर्पा-
त्किं सर्वयोषिदुपगूहनशङ्कया वा ॥ ९ ॥

पृच्छाम्यहं किमपि नाथ भवन्तमद्य
तथ्यं निगद्य कुरु मामपि वीतशङ्काम् ।
चापाहतिः किमनतिः शिरसा स्वयं वा
कामस्य दाहसमये तव कोपहेतुः ॥ १० ॥

---

१. मम देव निराकुरुष्व । इति पाठान्तरम् ।
८ द्वादशगु०

यत्सत्यमत्र वद निश्चयहेतुहान्या
दोधूयते मम मतिश्चिरकालमेव ।
किं ते श्मशानभसिते किमु सर्पहारे
सर्वस्वबुद्धिरुत भैक्षकपाल एव ॥ ११ ॥
एतत्कुतूहलवशेन ममास्ति किंचि-
द्विज्ञाप्यमद्य भगवन्भव सावधानः ।
किं ते गलस्य यदि वा विबुधाङ्गनानां
कण्ठस्य भूषणमवेक्ष्य विषोपयोगः ॥ १२ ॥
वाञ्छिश्रणं कुरु मदीयवचोभिरद्य
संदिग्धवस्तुकथनेन शशाङ्कमौले ।
मूर्धा नतिस्तव विलोप्तुमलक्तरागं
गौर्याः पदे किमुत वा दृशि कोपरागम्[1] ॥ १३ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये प्रश्नोक्तिपद्धतिः पञ्चदशी ।

---

षोडशी पद्धतिः ।

भिक्षाटनव्युपरमे सति यान्तमीशं
या विप्रयोगभयदुःस्थतयानुजग्मुः ।
तासां सरोरुहदृशामनुयानकाले
यच्चेष्टितं तदपि मां मुखरीकरोति ॥ १ ॥
पूर्वाङ्गमङ्गजरिपोः प्रतिनेत्रपात-
व्रीडाद्विलोकन(कित?)वती न पुरा नतभ्रूः ।
पश्चादमस्यदपराङ्गमनुव्रजन्ती
सर्वाङ्गवीक्षणमहोत्सवभाग्यहीना ॥ २ ॥

---

1. 'डोलायते' इति पाठान्तरम् ।

आन्दोलिताममरसिन्धुतरङ्गवातै-
रिन्दोः कलां शिरसि कापि विलोक्य शंभोः ।
एषा पतिष्यति पतिष्यति संप्रतीति
तत्स्वीकृतिव्यवसिता तमनु प्रतस्थे ॥ ३ ॥

तस्यां द्विदन्तिकसखीभिरुपेक्षितायाः
सख्यो न वा बत हरानुगमे बभूवुः ।
एका दृढा व्यवसितिर्महती वरान्या
काचित्कठोरगुरुवर्गनिषेधशङ्का ॥ ४ ॥

काचित्स्वबन्धुजनमेकपदे विहाय
रथ्यासमागतमनाकलितान्ववायम् ।
(१)भिक्षां विरूपनयनं वनितां विहाय
कामश्चिरं प्रणयमाहव(वह)ति क्षणेन ॥ ५ ॥

काचिज्जनस्य पुरतो मनसाध्यवस्य
मुग्धेन्दुचूडमनुगन्तुमुदश्रुनेत्रा ।
संयुध्यतोरथ जयार्थतयार्गलाभृ-
दुद्रिक्तमानमदनद्विपयोर्मुहूर्तम् ॥ ६ ॥

गच्छन्तमन्तकविपक्षमनुव्रजन्ती
धात्र्या कथंचिदपि कापि निवारिताभूत् ।
चक्रेऽथ केवलमियं मनसा नु यात्रां
वल्ली यथा सुमनसा मलयानिलस्य ॥ ७ ॥

गौरीपतेरनुगमेन किमित्युदीर्य
पूर्वं पुनस्तु वचनैर्विहितानुयात्राम् ।

---



१. 'कस्याश्चिद' इति पाठो भवेत्.

तच्चित्रमाप्तवचनैर्वनितार्थमूढै-
रित्यात्मनः प्रियसखीमपरा चुकोप ॥ ८ ॥
भिक्षाविसर्जनमकारि मया न तस्मै
मा भूत्कदापि मम याचनभङ्गदोषः।
आलप्य काचिदिति शङ्करमन्वयासी-
द्वर्वीं विना प्रहसितैव सखीजने ॥ ९ ॥
प्रते(?)त्नलिग्रहणकर्मणि कापि बाला
यातुं प्रवृत्तमवगम्य पिनाकपाणिम्।
एष्यं निशाघनतमस्यभिसर्तुमीशं
चूडेन्दुयाचनपरा चिरमन्विधा(या)य ॥ १० ॥
एका रहस्यभिमतं किल वक्तुकामा
दीर्घां विभोरनुगतिं विदधे मृषैव
सा किं करोतु सकलास्वपि चात्मनैव
तुल्याभिलाषगमनासु विलासिनीषु ॥ ११ ॥
एषा भविष्यति मनोभवसायकाना-
मद्यैव प(पा)त्रमिति तां सहसा विहाय।
तस्याश्चिदीशमपयान्तमियाय चेतो
नैवाप्तिरापदि फलाय नपुंसकेन ॥ १२ ॥
काचित्प्रयान्तमनुगम्य पतिं जवेन
बाला पदानि कतिचिन्न पुनः शशाक।
(?)शुक्तास्त्वया दिशमनेन गतामवेक्ष्य(?)
श्वासानिल(ला)स्तमनु दूरपथा(?)नुजग्मुः ॥ १३ ॥
नास्मादवाप्यनुमतिर्न सखी च लब्धा
संचायिका न च तया विदितोऽस्य देशः

काचित्तथाप्यनुजगाम हरं प्रयातं
न क्वापि हन्त गणना मदनातुराणाम् ॥ १४ ॥

संतर्जितापि गुरुभिः कृतसान्त्वनापि
जीवोपमैः परिजनैरनुयाचितापि ।
जाल्मैश्च कापि हसिताप्यनुशोचितापि
पथ्यस्थितैर्न गिरिशानुगतिं मुमोच ॥ १५ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्येऽनुगमनपद्धतिः षोडशी ।

---

सप्तदशी पद्धतिः ।

सर्वेश्वरोऽपि निजशासनहानिदोषा-
द्ग्रामेषु भैक्षचरणादिषु यः प्रयत्नः(त्तः) ।
आधातुमस्य विनयं गिरिशस्य चक्रुः
शिक्षावचांसि दृढभक्तिवशेन नार्यः ॥ १ ॥

याचे विभो जहि कराग्रकरोटिपात्र-
मेतद्विधातृवधपातकसूचकं ते ।
कर्मायशस्यमवशापतितं स्वकीयं
कः श्लाघयत्यनुदिनं जगति त्वदन्यः ॥ २ ॥

दाता जनोऽस्तु भुवने भवतोऽप्यनेकः
कामं तथापि न फलाय तवार्थितोऽयम् ।
रत्नाकरो विधिवशाद्यदि नाम शुष्ये-
त्कस्तस्य पूरणविधानपटुः पयोदः ॥ ३ ॥

भिक्षाटनं तव न यद्यपि वर्जनीयं
देहीति मा वद कदापि शशाङ्कमौले ।

अभ्यर्थिनामवनताननमुद्धुयैव(?)
दाता ददाति नहि देहिगिरापि लुब्धः ॥ ४ ॥
आमो(त्मो)परोधविरसा करुणा न जातु
भूयादितः प्रभृति ते कृपणामरेषु ।
चक्रे निसर्गविमलस्य तवापि कण्ठे
कार्ष्ण्यं वृषध्वज यदीयविपाकदोषः ॥ ५ ॥
गीर्वाणलोकसरिता सह नित्यमेना-
मस्थ्यावलिं शिरसि मा बिभृयाः पुरारे ।
त्वयं (य्य)क्रमाकलितविश्वपदार्थवर्गे
मा भूत्कदापि न विशेषविदित्यवद्यम् ॥ ६ ॥
भीमं भुजङ्गमपहाय पिनाकपाणे
कण्ठे कुरु प्रकृतिशीतलमेव हारम् ।
नेनैव शान्तिमुपगच्छतु कालकूट-
नित्यास्पदस्य सहसैव गलस्य तापः ॥ ७ ॥
मा जातु चन्द्रशकलाभरण श्मशाने
क्रीडा विभो सह पिशाचगणैर्विधेया ।
क्षुद्रे चिरं परिचयो विहितो विधत्ते
सौजन्यभूषणभृतामपि चित्तभेदम् ॥ ८ ॥
कस्त्वा निरोद्धुमलमीश यथेष्टचारं
विज्ञापनीयमथवास्ति ममैतदेकम् ।
गौरीपयोधरनिसर्गपरिग्रहेऽसि-
न्वक्षस्यमङ्गलचिताभसितं न कार्यम् ॥ ९ ॥
शार्दूलचर्मवसनव्यसनं विहाय
क्षौमं दुकूलमभवं परिधेहि नाथ ।

नैतेन यद्यपि तवास्ति विशेषलाभः
　शोभां तदाशु लभतां तव संश्रयेण ॥ १० ॥
प्रागेव जृम्भितमभूद्यशो जयत्सु
　पुष्पायुधं यदकरोर्नयनाग्निहव्यम् ।
नेत्रानलात्परिहरास्य सहायमिन्दु-
　चूडापगोर्मिचलनाद्भव सावधानः ॥ ११ ॥
श्वासेन हुंकृतिमता स्तनितैः कठोरै-
　रुत्तुङ्गशृङ्गयुगलेन च भीषणेन ।
यस्त्रासमावहति भीरुजनस्य शंभो
　हित्वा जरद्गवमिमं कुरु भैक्षचर्यम् ॥ १२ ॥
तेनैव वित्तपतिना जहि मैत्रबन्धं
　याच्ञाञ्जलिः शिरसि नाथ मुहुः कृतो मे ।
भिक्षाटनादुपरतिं तव यो न चक्रे
　शक्तो न चेत्करकरोटिविपर्ययं वा ॥ १३ ॥
मा दूयये पदयुगं नलिनप्रकारं
　सुत्रामनाथ पितृकाननचंक्रमेण ।
यत्क्षालयत्यहरहः परिषत्सुराणा-
　मुत्तंसपुष्पगलितैर्मकरन्दपूरैः ॥ १४ ॥
योगोचिते मदनसूदन सांख्यकाले
　शोकोचिते शवशतैर्निचिते श्मशाने ।
प्रेतप्रमोदनटनं भवता न कार्यं
　धिग्देशकालगणनाविधुरं चरित्रम् ॥ १५ ॥

१. 'तत्राक्षमः करकरोटिविपर्ययं वा' इति पाठान्तरम् ।

आत्मीयभूतिपरिभूतिकरीं समृद्धि-
माकल्ययाल्पशशिभूषणभृत्यवर्गे ।
आरोप्यते जलजनैर्जगदाधिपत्यं
यत्त्वत्समाश्रयणलब्धपदे मुकुन्दे ॥ १६ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये भिक्षाटनपद्धतिः सप्तदशी ।

---

अष्टादशी पद्धतिः ।

भिक्षाप्रतिग्रहमिषेण मृगेक्षणाना-
मादाय मानमपयायिनि लोकनाथे[1] ।
रथ्यासु दुःसहनवोत्कलिकाकुलानां
तासां चरित्रमहमद्य विजृम्भयामि ॥ १ ॥
हारः क्वचित्क्वचिदलक्तरसः क्वचिच्च
धम्मिल्लपुष्पनिवहः क्वचिदुत्तरीयम् ।
क्वाप्यर्धभग्नवलयानि मृगेक्षणानां
रथ्यां हरेण कृतचंक्रमणां विवव्रुः ॥ २ ॥
क्षोणीतले········निपातितहारमुक्तां
स्वीकर्तुमादृतवतीव निषण्णमूर्तिः ।
रथ्यारजःसु निहितानि विभो पदानि
काचिद्ददर्श सुचिरं पुरतः सखीनाम् ॥ ३ ॥
काचित्पुरारिपदलाञ्छनभूषिताया
वीथ्याविमोक्षविमुखी पुरतः सखीनाम् ।

---

१. 'चेतः प्रमथ्य गलिते सति लोकनाथे' इति पाठान्तरम् ।

भूमौ विकीर्य मुषतो(?) निजहारमुक्तां
तासां क(क्र)मग्रहणसंभ्रममाचकार ॥ ४ ॥

आदाय शंभुपदमुद्रितमादरेण
रथ्यापरागमपरा निदधे कुचाग्रे ।
कन्दर्पमुक्तशितबाणनवव्रणानां
निर्वापणार्थमिव सिद्धरसस्य चूर्णम् ॥ ५ ॥

मार्गे शिवस्य पतितं कृतमालपुष्प-
मादाय कापि बहु संकटमाससाद ।
यत्पुष्पमात्रधृतिभूषितमुत्तमाङ्गा
न्नैवाङ्गमस्ति च यदन्यत(द)तो वरिष्ठम् ॥ ६ ॥

शंभोः कपर्दगलितं कृतमालपुष्पं
लब्ध्वा सखीं प्रमुदितामवलोक्य काचित् ।
वीथ्यागतप्रणयिना स्वयमप्यवाप्तुं
चूडानदीमलभतैव दृशोः क्षणेन ॥ ७ ॥

वीथ्या ययाप ललितां कृतपुष्पमालां
शंभोः कपर्दगलितामपरा वहन्ती ।
तां वीथिकां न विजहौ शशिखण्डलोभा
लब्धेऽप्युपर्युपरि काङ्क्षत एव लोकः ॥ ८ ॥

वीथ्यां शिवस्य चरणाम्बुजदत्तमुद्रां
काचिद्विलोकयितुमाननमानमय्य ।
धारात्मना निपतदश्रुजलात्तदानीं
ज्याबन्धनी मदनकार्मुकयष्टिरासीत् ॥ ९ ॥

अत्रस्थितं सुचिरमत्र वलिर्गृहीता
साकूतमत्र गिरिशेन विलोकिताहम् ।

इत्याकुला परिजनैः सह तत्र तत्र
बभ्राम नष्टमिव कापि मनो विचेतुम् ॥ १० ॥
स्वीकर्तुमैच्छदपरां वसनाञ्चलेन
पांसुं⋯हरस्य पदमुद्रितमादरेण ।
विन्यासलोपचकिता मुहुरीक्षमाणा
नैवाददे न च मुमोच वधूश्चिराय ॥ ११ ॥
आदौ वृषस्य खुरधूलिरथास्य घण्टा-
नादः पुरः शिशिरमौलिधुनीसमीरः ।
वीथी स्वयं तदनु भूतपतेः प्रवासे
कस्याश्चिदाश्वसथहेतुरभूत्क्रमेण ॥ १२ ॥
संबन्धि वस्तु दयितेन सुदूरतोऽपि
लब्धं मनो रमयति ध्रुवमङ्गनानाम् ।
ईशानवाहनवृषाङ्घ्रिखुराहतायां
वीथ्यां रजोभिरपि निर्वृतिमाप काचित् ॥ १३ ॥
वीथ्यां चकार कृतमालमवेक्ष्य काचि-
न्मौलेः शिवस्य निपतेदिति जाततर्का ।
दैवात्तदास्यपचिचाय पुनः शशाङ्कं
लब्धेऽप्युपर्युपरि काङ्क्षत एव लोकः ॥ १४ ॥
यस्यां विरञ्चिवलसूदनदुर्लभाभ्यां
पद्भ्यां चचार सुचिरं स विहारभिक्षुः ।
स्वच्छन्दकेलिभवनादपि सैव रथ्या
पथ्येति कापि न कदापि गृहं विवेश ॥ १५ ॥
आत्मीयमेव धवलं वलयस्य खण्डं
मार्गे शिवस्य पतितं वनिता विलोक्य ।

सद्यः कपर्दगलिता शशिनः कलेति
जग्राह काचिदुपसृत्य कुतूहलेन ॥ १६ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये रथ्याचरितपद्धतिरष्टादशी ।

---

### एकोनविंशी पद्धतिः ।

आत्मीयनेत्रपथलम्बिनि भूतनाथे
रथ्यागता हरवियोगविषादशान्त्यै ।
वामेक्षणा जगदुरस्य कथाप्रसङ्गा-
दाविष्कृतामृतरसानि मिथो वचांसि ॥ १ ॥

कस्मादयं सखि करेण बिभर्ति शंभु-
र्भिक्षाटने विधिशिरोमयमेव पात्रम् ।
कार्या कदाचिदपि नार्थिषु कालहानि
र्दीर्घायुषामपि दशेयमितीव शास्ति ॥ २ ॥

पोत्री पदाम्बुजमलं न बभूव बोद्धु-
माद्यो जटाटविमुमादयितस्य हंसः ।
क्रोडस्य काननचरस्य न पङ्कजेन
हंसस्य पद्मवसतेर्न वनेन योगः ॥ ३ ॥

कोऽन्यो ददाति हिमसानुमतस्तनूजां
मारद्रुहे च जगति श्वशुरद्रुहे च ।
तं लब्धुमद्रितनयामपहाय कन्या
का वा करोति सुकुमारतनुस्तपांसि ॥ ४ ॥

कैवापरा गिरिसुतामपहाय कन्यां
कामद्रुहं जगति कामयते वृषाङ्कम् ।

तस्याः पितुर्हिमवतः श्वशुरद्गुहेऽस्मै
कोऽन्यो ददाति तनयामपहाय भीतः ॥ ५ ॥
अभ्यर्थितः सुरगणेन विमुक्तशङ्क-
श्चक्रे हरः किमिति तीव्रविषोपयोगम् ।
मन्येऽहमुत्तमगुणा गणयन्ति पथ्यं
याच्ञाविभङ्गकरणाद्विषपानमेव ॥ ६ ॥
नेत्रानलार्चिषि विभोर्मदनेन साकं
श्लोषोत्सवं किमिति नैव रतिः प्रपेदे ।
सा तत्र यत्नमकरोदथ भाग्यहान्या
तस्या बभूव नयनोदकमन्तरायः ॥ ७ ॥
कामप्रिया मदनमेव विभोर्वितन्वं
दग्धस्तदा किमिति नैव हुताशनेन ।
दाह्यो न किं व्यतिकरं शिवया शिवस्य
मूढः स्वकृत्यमिति दर्शयितुं प्रवृत्तः ॥ ८ ॥
शैलात्मजासहचरोऽपि हरः किमर्थं
मन्दाकिनीं शिरसि सादरमेव धत्ते ।
इत्थं न चेत्कथमयं बहुशो भवान्याः
पादप्रहारफलदं कलहं लभेत ॥ ९ ॥
देहीति दीनपदमाहितपात्रपाणिः
केनार्थिवेषमयमाहथने(द्रियते) वृषाङ्कः ।
सर्वो यथा विभवमाद्रियते जनोऽन्यः
कार्श्यं तथा प्रकृतिदुर्लभमीश्वरोऽपि ॥ १० ॥
भिक्षैव वृत्तिरजिनं वसनं यदस्य
वाहो वृषस्तदयमिच्छति किं महेशः ।

सर्वो यथा विभवमाद्रियते जनोऽन्यः
कार्श्यं तथा प्रकृतिदुर्लभमीश्वरोऽपि ॥ ११ ॥
निद्रानिमीलितविलोचनमूल्यमेष
शंभुः स्वदर्शनमदाद्गरुडध्वजाय ।
कालान्त एव विभवः कुटिलस्वभावै-
र्वृत्त्यैः प्रसाधितधियो महते फलाय ॥ १२ ॥
कैलासचालनकृतागस एव कस्मा-
दीशः कृपाणमदिशद्दशकन्धराय ।
संत्रासिताद्रितनयादृढकण्ठपाश-
लाभेन तुष्टहृदयः स न किं ददाति ॥ १३ ॥
आराध्य दुग्धजलधिः सुधयैव देवा-
न्देवाय हन्त महते गरलं दिदेश ।
एषा ध्रुवं प्रकृतिरेव जलाशयानां
नीचेषु संमतिरसंमतिरुत्तमेषु ॥ १४ ॥
विद्वज्जनो जगति येन पितामहेन
भिक्षाप्रतिग्रहणपात्रमकारि सर्वः ।
तस्योत्तमाङ्गमपि शंकरपाणिपद्मे
भिक्षाप्रतिग्रहणपात्रमहो बभूव ॥ १५ ॥
बाणाहवे मुरजिता विजितः पुरारि-
रित्येव विश्वगदितः सा[१]वे भूतवादः ।
सत्या स एव स यतः प्रभवो लयानां
भूत्यै पराक्रमणकृत्यमतीव हास्यम् ॥ १६ ॥



१. अस्फुटार्थोऽयमुत्तरार्धः.

शंभो पुरा यदभवन्मदनेन वैर-
मद्यापि किं सुदति तत्तदवस्थमेव ।
गौर्या सहैव कृतविग्रहसंधिना वा
पुष्पायुधोऽपि कृतविग्रहसंधिरेव ॥ १७ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये चरितोपलालनपद्धतिरेकोनविंशी ।

---

विंशी पद्धतिः ।

गौरीवरस्य पदपातपवित्रपांशुं
रथ्याः कथंचिदपहाय शनैः प्रवृत्तैः ।
गेहे प्रवेशचरितैः पुरमानिनीनां
वाणीमिमां वयममी चरितार्थयामः ॥ १ ॥

काचित्सखीविहृतपथ्यवचोङ्कुशानां
पातैः प्रवृत्तिविपरीतशिरोविधूतिः ।
पार्श्वस्थितैः परिजनैः परिगृह्यमाना
कृच्छ्रेण दुष्टकरिणीव निकेतमाप ॥ २ ॥

अच्छिन्नया स्मृतिरम्परयैव वीथ्यां
गौरीपतिं विहितसन्निधिमीक्षमाणा ।
सर्वास्वपि स्वनिलयं प्रति कामिनीषु
यातासु कापि न चकार गृहप्रवेशम् ॥ ३ ॥

प्राक्संगमे पुरजिता मदशोणरूपं
शोकेन पाण्डुरमतो नु गृहप्रवेशम् ।
कस्याश्चिदाननमभूदुदयाद्रिमेत्य
मग्नः कलङ्कितमहसा शशिना समानम् ॥ ४ ॥

आश्रित्य यं भवनतोरणदीर्घदण्डं
पूर्वं पुरारिमवलोकयति स्म काचित् ।
तन्मोक्तुमेव न शशाक गृहप्रवेशे
प्राप्ते तदा कलितमूर्तिरिव स्मरास्त्रैः ॥ ५ ॥

नीतां कथंचन गृहं प्रियबन्धुवर्गो
भूयोऽपि निर्जिगमिषुं सहसा रुरोध ।
स्निह्यत्यकारणमपूर्वकपालिनीति
तस्याः कथा झटिति हन्त बहिर्गतैव ॥ ६ ॥

निःश्वासमात्रशरणामकरोदवस्थां
कस्याश्चिदीशमपहाय गृहप्रवेशः ।
मत्तं मतंगजमपोह्य विधेर्विपाका-
द्वारिप्रवेश इव तापकरः करिण्याः ॥ ७ ॥

तापेन शोकमहता प्रविहाय रथ्या-
मेका विवेश भवनं बहवो निरीयुः ।
श्वासानिलैर्निरवधिर्नयनाम्बुपूरो
वादश्च हन्त विषमेक्षणगर्भिणीति ॥ ८ ॥

आपाण्डुगण्डयुगला गलदश्रुनेत्रा
स्वस्थानविच्युतकटीगुणबद्धपादा ।
आलीजनेन परितः परिरक्ष्यमाणा
बन्दीव कापि शनकैर्वसतिं विवेश ॥ ९ ॥

पूर्वं गृहात्प्रचलिता हरदर्शनाय
यामङ्घ्रियावकरसैररुणीचकार ।
बाष्पैर्मषीमलिनितैर्विनिवर्तमाना
तामेव कापि पदवीमसिता चकार ॥ १० ॥

काचित्कथंचन सखीजनसान्त्ववादै-
र्द्वारं गतापि हरमार्गविलोकनेच्छुः ।
वाणी मनस्विन इवार्थनदैन्यकाले
नान्तर्गता च वनिता न बहिर्गता च ॥ ११ ॥

या पूर्वमुन्नतपयोधरगौरवेण
क्लान्ताप्यवाप हरमीक्षितुमाशु रथ्याम् ।
तस्यैव सा हृदयदेशजुषा गरिम्णा
गेहप्रवेशमशकन्न पुनर्विधातुम् ॥ १२ ॥

नाथे चिरेण पतितामनिवर्त्य बुद्धिं
काचित्स्वयं निववृते गुरुवश्यबुद्धिः ।
तस्याः पुनर्बहुविचारसखीं विनैव
बुद्धिं कृतं तदनु हास्यमभूच्चरित्रम् ॥ १३ ॥

काचित्कथंचिदपि नैव गृहं विवेश
रथ्यां विहाय बहुभिः कृतसान्त्वनापि ।
कामातुरस्य हृ(ह)तबन्धुजनावकीर्णे
कारानिवाससम एव गृहे निवासः ॥ १४ ॥

गेहं प्रविश्य पुनरप्ययमागतः स्या-
द्वीथ्यां वृषाङ्क इति कापि विनिर्जगाम ।
रथ्यासु भैक्षचरणादपरं न कृत्यं
तस्येति सा मृदुमना गणयांचकार ॥ १५ ॥

काचित्प्रदक्षिणविकर्शनदुर्बलाङ्गी
वीथ्यां निपात्य निजभूषणमेकमेकम् ।
यावद्गृहोपगमनं ननु तावदेव
रथ्यावशेषसकलाभरणा बभूव ॥ १६ ॥

वीथ्याः कथंचन गृहं वचनप्रभेदैः
　　प्रावेशयद्भिरहिणीं प्रियबन्धुवर्गैः ।
चित्तं तदीयमसमाक्षविरक्तिवाचा
　　नालं प्रवेशयितुमेव पुनर्बभूव ॥ १७ ॥

काचिद्विवेश शयनालयमाप्तसख्या
　　रथ्यां विहाय हरवीक्षणहानिदूना ।
तस्या मनश्च विरहव्यथया सहैव
　　श्रीकण्ठसंगममहोत्सवलम्भचिन्ताम् ॥ १८ ॥

हस्तच्युतैश्च वलयैश्चिकि(कु)रप्रमुक्तैः
　　पुष्पैश्च यावकरसैश्च पदाग्रमुक्तैः
कीर्णैश्च भा(हा)रमणिभिर्गिरिशस्य रथ्या-
　　माकल्प्य कापि शनकैर्वसतिं विवेश ॥ १९ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये गृहप्रवेशपद्धतिर्विंशी ।

---

एकविंशी पद्धतिः ।

आलोक्य मारजनितां कृपणामवस्थां
　　वामभ्रुवां निजगृहं पुनरागतानाम् ।
संदूयमानहृदयो हितबन्धुवर्गो
　　यान्यप्यवोचत वचांसि वदामि तानि ॥ १ ॥

हा हन्त दग्धमदनस्तव पुष्पशय्या-
　　शेषं शरीरमकरोदसहाय एव ।
रात्रावथास्य नवकैरवगन्धबन्धु-
　　मन्दानिलप्रभृतयो बहवः सहायाः ॥ २ ॥



१ द्वादशगुं०

कालानलो यदलिकाक्षिणि रक्षितोऽभू-
त्कण्ठे च यद्गरलमर्पितमीश्वरेण ।
तत्सर्वमात्मविरहे सति बालिकानां
तापं विधातुमिति संप्रति मे वितर्कः ॥ ३ ॥
अस्या हरेण विरहादतिकर्शिताया
हस्तच्युतं वलयमेतदलब्धदेशम् ।
आस्ते पुनः स्थितिमगादिदमङ्गुलीयं
स्थानाच्युतिर्महत एव भवत्यनर्थः ॥ ४ ॥
अज्ञातमद्य तनये त्यज शोकशङ्कुं
पञ्चायुधः किमपि न त्वयि जातकोपः ।
किं तु त्वदीयहृदये गिरिशं निरुध्य
बाणैस्तमेव खलु विध्यति पूर्वशत्रुम् ॥ ५ ॥
सन्तापदाय्यसुलभार्थनमित्यजस्रं
बाले वदामि न मनागपि तच्छृणोषि ।
यद्वा स्मरास्त्रनिकरे हृदयं प्रविष्टे
पथ्योक्तयो न खलु कर्णपथं विशन्ति ॥ ६ ॥
वन्ध्यत्वमभ्यमनियम्यतनूजलाभाद्दुः
साधरोगनयनाद्बरमान्ध्यमेव ।
धिक्कामशिक्षितपरां मम सूतवत्याः
कृन्तत्यहो हृदयमाधिमयः कृपाणः ॥ ७ ॥
रागो नवश्वरणयोरनुयानजन्मा
मुक्तावली विरचिता नयनाम्बुलेशैः ।
अङ्गेष्वयं धवलिमैव यदङ्गरागो
दवः किं विनेन सखि ते व्रजतैव वेषः ॥ ८ ॥

भैक्षं प्रदातुमनघाय यदोद्यमस्ते
　तूष्णीं तदा सुकृतभङ्गभयादभूवम् ।
वत्से तदद्य मम पापमभूत्तवेत्थं
　यत्संशयस्थितिरियं मदुपेक्षयैव ॥ ९ ॥

सर्वोऽपि वक्ति जन एव शिवाभिधानं
　भस्मावलीं प(प्र)ति यथेप्सितमङ्गकेषु ।
तन्मे सुता विदधती परिहासपात्रं
　प्रायेण कामुकजनस्य गुणोऽपि दोषः ॥ १० ॥

घुर्घूरकं शिरसि नैव सुगन्धि पुष्पं
　भस्म स्तने न तव कुङ्कुमचन्दनादि ।
धत्ते सुता मम किमन्यदियं वृषाङ्के
　प्रेम्णा भविष्यति भुजंगमभूषणापि ॥ ११ ॥

यस्य क्षणं स्मरणमेव सुदुस्तराणां
　सर्वापदामुपशमाय वदन्ति वृद्धाः ।
दृष्ट्वापि तं शिवमियं पुनरेवमार्ता
　प्रायेण पुण्यमपि पुण्यवतां फलाय ॥ १२ ॥

तत्सत्यमेव किल यन्नवबन्धुजीव-
　शोभाहरं सखि हरायनमामनन्ति ।
तस्मान्नि(द)तीव रतिमद्य दधासि तेन
　शोभागतैव तव शंसयितुश्च जीवः ॥ १३ ॥

मेघं विना स्थितिमगान्न तडित्तथैव
　बाला वृषाङ्कमिति भीतिरभूत्पुरा मे ।
लाभो महालयमहो यदभूदमुष्याः
　प्राणैर्निजैः सह पुनर्भवनप्रवेशः ॥ १४ ॥

यस्त्वां क्षिणोति विशिखैः स्वशरण्यभूता-
मेवं सदा सुमुखि तेन समः स मारः ।
शाखां स्वयं समधिरुह्य महीरुहस्य
यस्तां छिनत्ति निशितेन परश्वधेन ॥ १५ ॥
यन्न्याय्यवर्त्मगमनं निपुणा च या धी
र्लज्जा च या यदपवादभयं त्वदीयम् ।
तत्सर्वमालि कथमेकपदे विनष्टं
सर्वंकषः स खलु तत्रभवाननङ्गः ॥ १६ ॥
बालामिमां हतमनोभवपुष्पबाणै-
र्मा विध्य संप्रति वदामि तवैव पथ्यम् ।
अस्या मनस्यविरतं वसतीन्दुमौलि-
स्सर्ता न किं भवसि तेन पराजयं ते ॥ १७ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये बन्धुवचनपद्धतिरेकविंशी ।

---

द्वाविंशी पद्धतिः ।

यैश्चेष्टितैः प्रकटितः पुरसुन्दरीणां
भूयो विजेतरि पुरामनुरागबन्धः ।
प्रस्तुत्य तानि विरहोज्ज्वलमन्मथानि
संपादयामि विदुषां श्रवणातिथेयम् ॥ १ ॥
संतर्जिता गिरिशमालपसीति मात्रा
काचिन्नपानतमुखी भुवमालिलेख ।
रेखा तदाकृतिरभूत्किमियं विभक्तां
चित्रानुसारि वचनं च विचेष्टितं च ॥ २ ॥

पार्श्वं व्रजाशु गिरिशस्य निशान्धकारे
　मा ते विषाद इति जीवसखीजनेन ।
आश्वासिता झटिति कापि निमील्य चक्षुः
　संपादितं तम इति प्रमदा जगाद ॥ ३ ॥

तुङ्गौ युवामिह वृथैव प्रथासुवृत्ता-
　वन्योन्यसंगमजुषौ च वृथेति काचित् ।
श्रीकण्ठबाहुयुगलान्तरकाङ्क्षयेव
　कण्डूभृतौ करतलेन कुचौ ममर्द ॥ ४ ॥

का चिद्दिवैव गिरिशाभिरतिं विधातुं
　संनह्यति स्म हसितापि सखीजनेन ।
रागोपजाततिमिरावृतमानसानां
　नास्ति प्रियाभिसरणे दिनरात्रिभेदः ॥ ५ ॥

क्रीडाशुकं हर हरेति शनैः प्रवृत्तौ
　यत्नेन पाठयितुमन्तरमन्मथापि ।
मातुर्भयेन पुनरेवमवोचदेत-
　दिष्टं फलं मम करादिति वाक्यशेषम् ॥ ६ ॥

बालेन्दुशेखरमनारतकालकण्ठं
　पिङ्गत्विषा तिलकितालकमीक्षणेन ।
सख्योऽपि यूयमिह पश्यत पश्यतेति
　कस्याश्चिदाविरभवन्विविधा विलापाः ॥ ७ ॥

बन्धुष्वनादृतवती चिरसंस्कृतेषु
　भस्मावगुण्ठिततनुर्दृढबन्धमौना ।
काचित्सदैव हृदये शिवमर्चयन्ती
　योगं नियोगविधुरा फलितं चकार ॥ ८ ॥

कस्याश्चन स्तनभरो मसितेन शंभो-
वक्षःस्थलप्रणयिना वनितं चकार ।
यः कर्तुमीप्सति समागमनं महद्भि-
स्तद्वल्लभेन कुरुते तदयं पुरैव ॥ ९ ॥
तुष्टाव निन्दति जने त्रिपुरारिमेका
पार्श्वस्थिते स्तुवति गाढतरं निनिन्द ।
मौनावलम्बिनि चुकोप चकोरदृष्टिः
स्नेहप्रिये दुरवबोधगतिर्वधूनाम् ॥ १० ॥
काचिन्निजाङ्कमधिरोप्य शनैर्विपञ्चीं
गाथामुपाक्रमत पाठयितुं शिवस्य ।
तस्या विलोचनजलैः पुनरार्द्रव(य)द्भि-
स्तन्त्रीं स्वकीयजलता प्रकटीकृतैव ॥ ११ ॥
एका त्रपोदयवशेन पुनः सखीनां
चित्रे विधातुमसमक्षमपारयन्ती ।
बाह्यं विहाय करणं पटतूलिकादि
चेतःपटे स्मरणतूलिकया लिलेख ॥ १२ ॥
शीघ्रं नयात्र सखि संप्रति नीलकण्ठ-
मित्यूचिषी सपदि मात्र(तृ)भयेन काचित् ।
तीव्रातपादुपवनादिति पूरयित्वा
लीलामयूरवि[illegible]यं वचनं चकार ॥ १३ ॥
चक्षुश्चकार निजसद्मनि यत्र यत्र
विश्लेषणैर्गिरिशमैक्षत तत्र तत्र ।
एतद्ध्रुवं सपदि संगमतोऽपि मन्ये
विश्लेष एव दयितेन वरं वधूनाम् ॥ १४ ॥

शंभुर्यथा गृहमगान्मम भैक्षकाङ्क्षी
मां भिक्षयैव सह दत्तवती तदानीम् ।
प्राप्तः स एव हृदयालयमाशु तस्मै
किं देयमद्य कथयेति सखीमपृच्छत् ॥ १५ ॥

अध्यापितो रहसि केलिशुकः कयापि
नामानि मन्मथरिपोर्विरहार्तिशान्त्यै ।
तानि क्षणाद्गुरुजनस्य परो निगद्य
तस्या मनस्थविकृतिं प्रकटीचकार ॥ १६ ॥

यः कोऽपि सोऽस्तु विषमा गतिरेष रोगो
भस्मार्पणं निखिलरोगसमा चिकित्सा ।
मातुः पुरो वचनमेवमुदीरयन्त्यां
सख्यां न्यधत्त तरलां दृशमाशु काचित् ॥ १७ ॥

काचिन्निजाशयतिरस्करणाय शंभो-
र्निन्दापराण्यकथयद्वचनानि बाला ।
तानि प्रकोपमधिकं जनयांबभूवु-
स्तस्याः पुनः परिजनैरनुभाषितानि ॥ १८ ॥

गाथाः शिवस्य विलपन्नपरो मृगाक्ष्याः
क्रीडामृगो विरहतापमपाचकार ।
संस्मारयन्निजगलेन सितेतरेण
कण्ठं तदीयमसकृद्गृहबर्हिणोऽपि ॥ १९ ॥

इत्युत्प्रेक्षावल्लभकृतो भिक्षाटनकाव्येऽनुरागपद्धतिर्द्वादशी ।

त्रयोविंशी पद्धतिः ।

...भ्यो दुरापहरसंगमलोलुपाभ्यो
बन्धुर्जनः स कटु पथ्यवचो बभाषे ।
तासां तदीयवचनश्रवणार्दितानां
ब्रूमो वचांस्यनुगुणार्थमनोहराणि ॥ १ ॥
मातः सदा गिरिशसंगमविघ्नमेव
याचे करोषि न ततस्त्वयि जातरोषा ।
स्नेहं मिथो न गणयन्ति यतः पुरन्ध्र्यः
सापत्न्यमेव करणस्पृहया वहन्त्यः ॥ २ ॥
मां दुर्निवारविषमास्त्रकृतावसादां
या तर्जयत्यसकृदेव शठैर्वचोभिः ।
अप्राप्य यौवनमनङ्गविधेयमेषा
मन्ये मदीयजननी जरती बभूव ॥ ३ ॥
अद्यापि शैशवमिदं परिवर्तते मे
तन्मैव मां प्रति सवित्र(त्रि)हितोपदेशः ।
ये यौवनस्थितिजुषो जगतीह तेषा-
माचार्यकं वहति मन्मथ एव नान्यः ॥ ४ ॥
कंदर्पमुक्तविशिखव्रणिताशयस्य
...े दुर्विदग्धगुरुसंनिधिदेशवासः ।
लुब्धकिरातशररुग्णतनोर्मृगस्य
मन्ये क्षुधार्तमृगवैरिगुहाप्रवेशः ॥ ५ ॥
पथ्योपदेशसमयः स गतः सदूरो (सुदूरे)
यस्मिन्सन्ति मदनज्वरसंनिपाताः ।

किं नैव वेत्सि जननि त्वमिमामवस्थां
　　यस्याः कथंचिदपि जीवितमेव रक्ष्यम् ॥ ६ ॥
शाम्येदपि स्वयमयं मदनारि(ग्नि)रीशे
　　नैराश्यतो जननि मा कुरु तं प्रदीप्तम् ।
एधांसि नीरसनिषेधवचांसि मन्ये
　　कामानलस्य गुरुभिर्बहुशः कृतानि ॥ ७ ॥
स्नेहो न ते मयि परं मम देह एव
　　मातः किमन्यदिदम(र)त्र मम प्रमाणम् ।
ईशानुसारविनिवारणमाचरन्ती
　　यन्मे झटित्यसुगतेर्विदधास्यनुज्ञाम् ॥ ८ ॥
मातस्त्वदीयवचनैः शितशूलकल्पै-
　　र्नाहं मृता किमिति मर्मसु ताडितापि ।
प्रायः प्रियेण विरहव्यसने वधूनां
　　प्राणप्रयाणमपि पुण्यफलं वदन्ति ॥ ९ ॥
छायां समाश्रयति काममहाद्रुमस्य
　　सर्वोऽपि संसृतिमरुस्थलचारतप्तः ।
निन्दत्यथापि किमिमं वयसो विपाके
　　मन्ये जरा जनयति स्मृतिमूलनाशम् ॥ १० ॥
(?) अस्त्येव शंभुविषयान्मनसो विकारा-
　　द्रागो ममाद्य सखि मा परसङ्गमूलम् ।
पौष्पं रजः सपदि मालघ(य) मारुतार्थ्यं
　　मूर्ध्नो वधायमपरं(?) पुरुषं जनस्य ॥ ११ ॥
मातः समस्तमपरं वचनं विमुञ्च
　　शैवीसमागमकथा यदि तां शृणोमि ।

मत्कर्णयोर्ज्वलितकालहुताशतप्त-
नाराचपातसदृशोऽन्यवचःप्रवेशः ॥ १२ ॥
धामान्नि(या मां नि)यच्छति सुदुर्लभकाङ्क्षिणी भू-
र्मा मेति किंचिदपि सा जननी न वेत्ति ।
सर्वैर्विना प्रियतमैः सुखमासितव्यं
स्वापेक्षया यदि भवेदभिलाषबन्धः ॥ १३ ॥
मामद्य शिक्षयसि शंकरवादमात्रा-
द्रोमाञ्चकण्टकितमूर्तिरसि त्वमेव ।
वृद्धः करोति विनयं विषयात्परस्मै
तस्मान्मनागपि निवर्तितुमक्षमोऽपि ॥ १४ ॥
कष्टा नितान्तमशरीरिशरेण पीडा
तस्या यदस्म्य(?)तितरार्तिगतो विशेषः ।
प्रायेण शत्रुरपि शोचति मर्त्यमार्तं
मातापि नैव दयि(य)ते मदनातुरेषु ॥ १५ ॥
त्रातुं कृताभिलषितैःस्मरयन्त्रवृत्ता-
न्मौनव्रतैर्गुरुजनैर्भवितव्यमेव ।
स्वादूकरोति सुकृतामपि कामवृत्तिं
शास्त्रेण वा गुरुजनेन च वा निषेधः ॥ १६ ॥
यो वक्ति पथ्यवचनं हृदयानुकूलं
यो वा भिषज्यति भिषक्प्रियभेषजेन ।
तावेव बान्धवजनश्च चिकित्सकश्च
प्रच्छन्नशत्रुरपरो न सुहृन्न वैद्यः ॥ १७ ॥
एतन्नम(?)प्रथममम्ब मयि त्वदीये
प्रेम्णो पुनस्तदनुरूपविचेष्टितव्यः ।

यन्मां प्रतीत्थमुपदेशविधिस्तवायं
मा भूद्विजेतरि पुरामनुरागबन्धः ॥ १८ ॥
अद्यापि शैलसुतया वपुरैक्ययोग-
मङ्गीकरोति गिरिशः स्वयमादिवृद्धः ।
केषांचिदत्र तदयं जरतां जनानां
कामानवाप्तिपर एव विरक्तिवादः ॥ १९ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये गुरुवचनोपालम्भपद्धतिस्त्रयोविंशी ।

---

## चतुर्विंशी पद्धतिः ।

रथ्यां विमुच्य कथमप्यसुनिर्विशेषै-
रालीजनैर्भवनमाशु निवेशितानाम् ।
वामभ्रुवां शशिकलाधरविप्रयोगे
देहाश्रयाणि चरितान्युपलालयाम ॥ १ ॥
कस्याश्चिदक्षियुगलाधरयोर्वियोगे
जातः प्रसाधनविधेर्विपरीतभावः ।
बाष्पैस्तयोः प्रथम आहितराग आसी-
अन्तःश्वसन्मलिनितः श्वसितोष्मणैव ॥ २ ॥
भस्मालिलेप कुचयोर्हरिचन्दनादि-
लेपं विहाय विरहे वनिता हरेण ।
बाष्पोदकं तदपि हन्त पुनर्निरासे
शुध्यन्त्ययोर्निरसनेन जलस्य भेदः ॥ ३ ॥



१. भस्मोत्तरार्धस्यास्फुटत्वम्.

त्यक्तेऽपि रत्नवलयैः सह केलिपद्मै-
हस्तादवाप्तगलने मणिकंदुकेऽपि ।
कस्याश्चिदेव न जहौ करभूषणत्वं
क्रीडाशुकः पठितशंकरनामधेयः ॥ ४ ॥
श्वासानिलश्च नयनोदकनिर्गमश्च
जातागसी(सौ) विरहिणीकुचयोरभूताम् ।
आक्षेपणेन लघुनो वरणांशुकस्य
लोपेन च प्रचुरचन्दनकर्दमस्य ॥ ५ ॥
विश्लेषदुर्वलमकारणपाटलेन
संसृज्यमानमपि गण्डतलं करेण ।
आपाण्डुरच्छवि बभूव मृगेक्षणायाः
संसर्गजा इति मृषैव गुणाश्च दोषाः ॥ ६ ॥
संमानपात्रमहमस्म्यमृतांशुमौले-
र्भूयासमित्यधिकवर्धितकौतुकेव ।
अन्या वधूरहरहः परिकर्शनेन
स्वाङ्गं शशाङ्ककलया सममेव चक्रे ॥ ७ ॥
कस्याश्चिरग(रं ग्ल)पितचम्पककान्ति गात्रं
जातं हरेण विरहे घनसारगौरम् ।
(?)निःशृङ्खलप्रसृतिभिस्तदसंनिधाने
व्याप्तं मनोभवयशोभिरिवा(रा)वभासे ॥ ८ ॥
दृष्टे पुरा पुरविरोधित(नि) काचिदङ्गै-
र्यां कण्ठकोद्गतिमयीं(?) ह रतिं प्रपेदे ।
तां नैव जातु विजहौ विरहेऽपि तस्मि-
न्नन्तर्हितेऽपि सवितर्यरविन्दिनीव ॥ ९ ॥

तुल्या शशाङ्ककलयेति मृगेक्षणायाः
स्थौल्यातिरेकभणितावपरः प्रकारः ।
अङ्गानि शङ्करवियोगभुवा तनिम्ना
मध्याङ्गसाम्यमितराण्यपि शोच्यमापुः ॥ १० ॥

आत्मीय एव सति धार्यदशां प्रपन्ने
कस्तस्य धारणमृते परधारणाय ।
यत्खेदपाण्डरमधान्मुखपद्ममेका
हस्तोदरे विरहिणी न तु केलिपद्मम् ॥ ११ ॥

कस्याश्चिदश्रुसलिलेषु कृताभिषेकं
शोकानलेन हृदयज्वलितेन तप्तम् ।
गौरीपतेरुपरि लब्धुमिव प्रदेशं
तीव्रं तपः पृथुकुचद्वयमाचचार ॥ १२ ॥

आप्तो भवेद्यदि विपत्करणे प्रवृत्तः
पीडां करोत्यरिजनादपि देहभाजाम् ।
द्रष्टुं दिवा हरमुदश्रुतया मृगाक्षीं
स्वप्नेऽपि लोचनमपिहितया रुरोध ॥ १३ ॥

नालंकृतौ न शयने न मिथः प्रलापे
न क्रीडनेषु न च भोजनपानयोर्वा ।
आस्थावती शिवसमर्पितचेतनैका
रागो निरत्ययसुखोऽन्यविरक्तिहेतुः ॥ १४ ॥

श्वेताकृतिस्तरुणपल्लवतल्पमध्ये
संध्यानभस्यभिनवा शशिनः कलेव ।



१. अस्फुटार्थोऽयं श्लोकः.

दुर्लक्ष्यमूर्तिरपि काचिदतीव कार्श्या-
त्संलक्षिता हितजनेन कथंचिदेव ॥ १५ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये विरहिण्यवस्थापद्धतिश्चतुर्विंशी ।

---

पञ्चविंशी पद्धतिः ।

निष्पाप एव गिरिशे विहितस्पृहाणां
वामभ्रुवां मतिविभेदनकारणेन ।
आप्तो जनो रहसि यानि जगाद तानि
प्रत्युत्तरैः सह वदामि पुनस्तदीयैः ॥ १ ॥
इन्दीवराक्षि विषमाक्ष इति प्रसिद्धे
मा त्वं कृथाः पुरविरोधिनि पक्षपातम् ।
वैरूप्यमेव सखि तस्य चिराय काङ्क्षे
येनायमन्यवनिताजनवर्जनीयः ॥ २ ॥
कण्ठे हरस्य न वरं परिरम्भणं ते
हारोरगेण न कदापि यदेष शून्यः ।
त्राताः पयोधिमरलादपि येन लोका-
स्त्रातुं न मामहिविषात्किमयं समर्थः ॥ ३ ॥
यः कामदेवदहनाद्विरसः प्रसिद्ध-
स्तस्मै कुतः स्पृहयसि त्रिपुरान्तकाय ।
कोऽन्यः क्षमेत मदनद्रुहमन्तरेण
रक्षां विधातुमिह मन्मथपीडितानाम् ॥ ४ ॥
आश्लेषणेषु कथमिच्छसि शंकरस्य
भस्मक्रयं सुरभिणा कुचकुङ्कुमेन ।

न्यूनार्धमेव भसितादपि कुङ्कुमं त-
दर्धस्थितिः परमभिज्ञम(क्र)तैकमन्नात् ॥ ५ ॥
येनार्धगात्रमनुरागवशाद्वितीर्णं
कस्यैचिदेनमपि कामयसे किमर्थम् ।
चक्रे ध्रुवं स पुनरर्धशरीरदाना-
दन्याङ्गनाप्रणयसंगमनाभ्यनुज्ञाम् ॥ ६ ॥
यो नीरसाग्रगणितः स्मरदेहदाहा-
त्तस्मिन्पिनाकिनि कथं तव कामबन्धः ।
स्वारस्यवानथ च वा विरसः स भूया-
त्कान्त्यैव वश्यमनसः पुरुषे युवत्यः ॥ ७ ॥
भूलोकभृङ्गवनिता यदि दिव्यपुष्प-
माघ्रातुमिच्छति तथा हरसंगमस्ते ।
अस्माकमक्षिविषयः सहसैव योऽभू-
त्किं संभवेन्न हि हरेण समागमोऽपि ॥ ८ ॥
पाणिं हरेण यदि वाञ्छसि गृह्यमाणं
भीरु त्वयाप्युरगकौतुकमेव धार्यम् ।
सत्यं तदेव दृढकौतुकबन्धि(न्ध)नं मे
व्यर्थः करे शिथिलकौतुकतन्तुबन्धः ॥ ९ ॥
भर्तारमिच्छसि शिवं यदि तेन सार्धं
वस्तव्यमालि नियतं पितृकाननेषु ।
एणीदृशां हृदयवल्लभसंनिधाने
सौधस्थलस्य विपिनस्य च को विशेषः ॥ १० ॥
हित्वा तपांसि परुषाणि हरो दुरापः
कर्तुं क्षमं न खलु तावकमङ्गमेतत् ।

मुग्धे तदीयविरहानलतीव्रतापा-
दसादसह्यतरमस्ति तपः किमन्यत् ॥ ११ ॥
शैलात्मजैव हरमर्हति कामिनीषु
मुग्धे कथं कथय तेन समागमेच्छा ।
अर्हेतराणि गणनापरवेषवन्ति
सर्वोऽपि सर्वमपि वाञ्छितुमर्ह एव ॥ १२ ॥
उन्मादिनी त्वमिति निश्चितमालि किं तु
तन्मात्रवेषचरिते यदि ते रिरंसा ।
उन्मादिनी यदि भवेयमहं तथा त्वं
नो मन्त्रशिक्षणविधिः प्रकृतिस्थितानाम् ॥ १३ ॥
गौरीं विना सखि कदापि न शंभुरास्ते
कालोऽन्यया सह न तस्य समागमाय ।
रात्र्या सहैव चरि(र)तो दिवसस्य नित्यं
किं संध्यया न सममस्ति मुहूर्तयोगः ॥ १४ ॥
व्रीडां तनोति मदिराक्षि विशेषतोऽपि
वामभ्रुवामननुरागिणि रागबन्धः ।
श्लाघावहो भवति नैव किमापगाना-
मम्भोनिधेरुपरि [illegible] ॥ १५ ॥
कामं हरः सुलभ एव विहाय भीतिं
सापत्न्यमिच्छसि कथं जगतां जनन्याः ।
अस्थानधावनपरस्य मनोभवस्य
प्रायेण नैव हि जलस्थलयोर्निपातः ॥ १६ ॥
गौर्याः पुरो वहति यः शिरसैव गङ्गां
विस्रम्भभूमिरियमालि कथं [illegible] ।

स्त्रीशब्दमात्रतरले तरुणेन्दुमौलौ
　　तस्मिन्ममापि खलु पाक्षिकलाभशङ्का ॥ १७ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्येऽतिदीनोक्तिप्रयुक्तिपद्धतिः पञ्चविंशी ।

---

षड्विंशी पद्धतिः ।

उद्यानमाशु विविशुर्हरविप्रयुक्ता
　　नार्यो निजार्तिपरिहारमतिभ्रमेण ।
पूर्वं निरूढपतनैर्मदनः शरैस्ता..........
　　स्तस्याथ दृश्यपतनैश्च सुसंस्कृतैव ॥ १ ॥

काचिन्निजोपवन एव वियोगरुग्णा
　　पुष्पाणि वीक्ष्य विकचानि भृशं दुदूये (?) ।
हासो जनस्य निजचापलदर्शनोत्थः
　　सह्यः स्मरातुरजनैर्नतु पुष्पहासः ॥ २ ॥

आलोलकिंशुकतरोस्तरुणप्रसून-
　　मापाटलं परिजहार भयेन काचित् ।
निर्भिन्नकामिहृदयक्षतजावसक्तं
　　नूनं स्मरास्त्रमिदमित्युपजातबुद्धिः ॥ ३ ॥

काचिद्वधूः शमय शंभुवियोगताप-
　　मित्यादरेण मलयद्रुममालिलिङ्ग ।
लेभे स सिद्धिमतुलां तरुणैरलभ्यां
　　नैषा स्मरार्तिशमनं फलमाप किंचित् ॥ ४ ॥

कन्दर्पबाणनिकषच्युतचूर्णकल्पं
　　सद्यः परागमवलोक्य दिशासु पौष्पम् ।

आसूचिताखिलवियोगिजनव्यपाय-
मुत्पातपांसुमपरा गणयांचकार ॥ ५ ॥
काचिद्गता विरहिणी सहकारमूल-
माकर्ण्य शब्दमशनिस्वननिर्विशेषम्।
सद्यः किमित्युपरि लोचनमर्पयन्ती
पापादवैक्षत भयंकरमन्यपुष्टम् ॥ ६ ॥
कर्णे कयापि करपल्लवमर्पयन्त्या
भृङ्गस्वनव्यथितया गृहवाटिकायाम्।
व्याख्यातमेव च सखीजनदीयमान-
कर्णावतंसनवपल्लवनैरपेक्ष्यम् ॥ ७ ॥
दृष्ट्वा पलाशमुकुलान्कुटिलस्वभावा-
न्काचिद्भयादपससर्प सुदूरतोऽपि।
मिथ्या प्रकाश्य भुवने निजसौमनस्यं
कौटिल्यमात्मनि वहन्परिवर्जनीयः ॥ ८ ॥
आलम्बितो विरहदुःखितया कयाचि-
दाम्रद्रुमस्य सहसा तरुणप्रवालः
कृष्णच्छविर्यदभवन्ननु युक्तमस्य
प्रागेव पाणितलशोणितमस्तकस्य ॥ ९ ॥
यस्यैव चम्पकतरो(र)पनीय(?) पूर्वं
मूले ददौ (वि)मलशीतलवारिधाराम्।
तस्येतरा कुसुमितस्य विनिश्चिकाय
दातुं पुनर्विरहिणी निशितास्त्रधाराम् ॥ १० ॥
भृङ्गस्वनास्य(व्य)कुसुमे कुरवे पुरस्थे

गाढं निमील्य नयने विरहिण्ययत्नात्।

कर्णद्वये तु निजसिद्धिविधानहीने
काचिन्ननन्द च निनिन्द च पद्मयोनिम् ॥ ११ ॥
काचित्पुरा प्रतिदिनं परिवृद्धिहेतो-
र्यस्यै दिदेश सलिलं नवमल्लिकायै ।
सा पुष्पितैव जलमश्रुमिषाद्वियोगे
तस्यै प्रदाय कथमप्यनृणा बभूव ॥ १२ ॥
पुष्पेषु संसृतिमतीं क्वणितालिमाला-
मालोक्य कापि महदेव भयं प्रपेदे ।
शंभोस्तृतीयनयनानलधूमनीला
सा मन्मथस्य धनुषो यत एव मौर्वी ॥ १३ ॥
यो लम्बितो विरहधर्मितया कयाचि-
दुद्यानचूतविटपो मधुसंभृतश्रीः ।
म्लानप्रवालकुसुमः क्षणएव जातः
स्पर्शोऽपि कामुकजनैः कुरुते विपत्तिम् ॥ १४ ॥
अङ्गारसंचयमतिर्विरहातुरायाः
पुष्पेष्वजायत पलाशमहीरुहस्य ।
सा स्थापितेव मधुपैः पुनरत्र लीनैः
किंचित्प्रशान्त्युचितकार्ष्ण्यधियं विधाय ॥ १५ ॥
मा पुष्पितोऽयमिति नैव चकार काचि-
दुद्यानभाजि पदघातमशोकयूनि ।
न्यक्कारकृत्यमपि नाभिलषन्ति कर्तुं
प्रायः प्रसादविषयादपरत्र नार्यः ॥ १६ ॥
कामाक्रमेतदिति जातरुषा लतासु
विश्लेषिणी सुमनसां हरणे प्रवृत्ता ।

कामाङ्गरक्षकजनैरिव सद्य एव
सैषा न्यरोषि(धि) कृतहुंकृतिभिर्द्विरेफैः ॥ १७ ॥
स्निग्धेन कोकिलरुतेन नवोद्गतेन
चूताङ्कुरेण पवनेन च मालयेन ।
कालं वसन्तमवलोक्य जनोपकण्ठे
कालं वसन्तमपरा कलयांचकार ॥ १८ ॥
आलम्बिता विरहधर्मितया कयाचि-
त्क्लान्तप्रवालकुसुमाभवदाम्रशाखा ।
तां वीक्ष्य तादृशदशां प्रणयिन्यथास्यां
दीर्घं स्वकीयमजुगुप्सत बन्धुभावम् ॥ १९ ॥
आमूलपुष्पितमवेक्ष्य पलाशमन्या
विश्लेषिणी ज्वलितवुद्धिरिमं शशाप ।
अङ्गारकारकरगोचर एव पूर्वं
पश्चात्त्वमेवमरुणच्छविराशु भूयाः ॥ २० ॥
यस्याश्चिराय विदधे गृहयूथिकायाः
पुष्पोद्गमाय बहुदैवत[त]र्पणानि ।
तां पुष्पितेन परिगृह्य चकार काचि-
द्विश्लेषिणीयुवतिजातिसमानकक्ष्याम् ॥ २१ ॥
अप्यात्मनापरिहृतेन सखीसमक्षे
दृष्ट्वा वसन्तसमये बकुलं सपुष्पम् ।
काचिद्व्यथां विरहिणी महतीं प्रपेदे
सत्यं नहि प्रतिनिधिर्भवितव्यतायाः ॥ २२ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये वसन्तवर्णनपद्धतिः षड्विंशी ।

### सप्तविंशी पद्धतिः ।

उद्यान एव ननु पुष्पितशाखिवर्गे
विश्लेषतप्तमनसां मदिरेक्षणानाम् ।
तं तं विनोदमनुभूय विषादवेगा-
द्वाक्यानि वक्रगलिनानि विजृम्भयामः ॥ १ ॥

यन्नाम ते जगति रूढमजातवृत्त्या
जातं पुरा कुरवकद्रुम वाच्यमेव ।
भूयस्तदद्य भवता कृतमन्वितार्थं
वाचालमत्तमधुपावसथं(?) प्रदाय ॥ २ ॥

उद्यानभूषण तवेदमयुक्तरूपं
छायाप्रदानहृततप्तजनश्रमस्य ।
अस्मिञ्जने विरहपावकतापवृध्द्या
शोकातुरेऽपि यदसि त्वमशोक एव ॥ ३ ॥

वाचालकोकिल तथा मधुराणि पूर्वं
मां पीडयन्ति विधुरां तव कूजितानि ।
धन्यं धिनोति वचनैः श्रवणानुकूलै-
रन्यं दुनोति परुषैः परपुष्टजातिः ॥ ४ ॥

किं किंशुक त्वमपि संप्रति वीतलज्जः
कर्त(र्तु) व्यवस्यसि रुजं कुसुमैरगन्धैः ।
अभ्यर्थितोऽहमिति किल्बिषमानसाना-
मस्त्येव दार्क्ष्य(क्ष्य)मसतां परि(र)पीडनेषु ॥ ५ ॥

भृङ्गाङ्गने सखि तवापि ममापि तुल्या
श्रीकण्ठ[कण्ठ]रुचिरस्त्यथ कोप(ऽपि) भेदः ।

१ पद्यमिदं व्यतिरेकालंकारप्रकरणे विश्वेश्वरेणालंकारकौस्तुभेऽप्युदाहृतम्.

पुष्पेषुचेष्टितमतीव तवानुकूलं
सत्यं तदेव हि मम प्रतिकूलमासीत् ॥ ६ ॥
आपीय सीधुरसमागलमुन्मिषत्सु
पुष्पेष्वमी तत इतश्चषकायितेषु ।
मन्ये कलध्वनिमिषेण मनोभवस्य
गायन्ति मत्तमधुपा विजयप्रशस्तिम् ॥ ७ ॥
पूर्वं मया चिरतरं सहकारबुद्ध्या
यः पोषितः प्रतिविधानमुखैः प्रयत्नैः ।
जातः स संप्रति जगत्त्रयनाशहेतु-
र्हा हन्त पुष्पसमये विषवृक्ष एव ॥ ८ ॥
नृत्तोद्यमोऽसि फणिसंगमनिर्भयोऽसि
बर्हिन्यदप्यसितबन्धुरकन्धु(न्ध)रोऽसि ।
तैस्तैर्गुणैरनुकरोषि पिनाकपाणिं
हन्तुंममार्तिमधुना कथमक्षमोऽसि ॥ ९ ॥
अम्भोनिधौ निपतितो यदि सेतुहेतोः
शैलोऽपि दक्षिणसमीरणजन्मभूमिः ।
सीतैव कान्तविरहे न परं कपीन्द्रैः
संरक्षिता युवतयः सकला भवेयुः ॥ १० ॥
यत्ते निसर्गलघिमा यदभूल्लतानां
संसृज्य पुष्परजसा तव धूसरत्वम् ।
मैत्रं च यत्तव जलैरुचितं तदा तै-
र्मन्दानिल त्वमसि यत्प्रतिकूलवृत्तिः ॥ ११ ॥
आरग्वधादनिल कोरकमाहर त्वं
सद्यः प्रसूनमथवा दलमेतदीयम् ।

सौरभ्यमेव यदि वा करुणा तवाहो
　　किं नाञ्जनेयजनकस्य वियोगिनीषु ॥ १२ ॥
अत्युच्छ्रितासु सहकारमहीरुहाणां
　　शाखासु पुष्पनिबिडास्वधिरूढवन्तः ।
प्रायः कुहूरिति पिका निजकूजितेन
　　व्रध्यां निशामभिवदन्ति वियोगिनीभ्यः ॥ १३ ॥
पोषं स्वकीयजननीपरिवर्जितानां
　　'कुर्वन्ति ये बलिभुजः पिकपोतकानाम् ।
तैः सम्यगेव विदितं परिरक्ष्यपात्रं
　　कृष्णात्मनां सुकृतरूपमपि क्रियासु ॥ १४ ॥
मात्रापि दुर्गुणतया परिवर्जितानां
　　के रक्षणं विदधते पिकपोतकानाम् ।
काकैर्न हन्त विदितं परिरक्ष्यपात्रं
　　कृष्णात्मनां सुकृतबुद्धिरसत्क्रियासु ॥ १५ ॥
पूर्वं मदीयवदनासवपुष्पितस्त्व-
　　मद्याहमस्मि विधिना हरविप्रयुक्ता ।
हा हन्त पीडयसि मां बकुल प्रसूनै-
　　र्भोक्तव्यमात्मकृतदुष्कृतमात्मनैव ॥ १६ ॥
वर्णः सुवर्णविजयी शुचिरेष गन्ध[:]
　　संभावना शिरसि ते परमेश्वरेण ।
एतत्तथापि कृतमाल तवास्ति दोषो
　　यत्संगतोऽसि मलिनैरसकृद्द्विरेफैः ॥ १७ ॥

---

१. इति पाठभेदः पुस्तकान्तरे दृश्यते ।

उद्यानकेलिकमलानि च तानि हित्वा
शंभोः पदाम्बुजयुगे यदि ते रिरंसा ।
गीर्वाणनाथगणकस्य जनार्दनादे-
रारुह्यतां सपदि लालित(?) मौलिमाला ॥ १८ ॥
काप्युच्चयः सुमनसां कुहचित्परागो
गन्धः क्वचित्क्वचन दक्षिणगन्धवाहः ।
दिष्ट्या वसन्तसमये मरणाभ्युपाय[ः]
सार्वत्रिको विरहदुर्भरजीवितानाम् ॥ १९ ॥
पूर्वं प्रवालमथ पुष्पमथो नु गन्धं
पश्चान्मधुव्रतकुलं पुनरस्य शब्दम् ।
चूते विधाय विधिरेवमभद्रमालां
किं किं करिष्यति वियुक्तनिरूढवैरः ॥ २० ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्य उद्यानोक्तिपद्धतिः सप्तविंशी ।

---

अष्टाविंशी पद्धतिः ।

उद्रिक्तशंकरवियोगविषादशान्त्यै
नानाविधे सपदि बन्धुजनैः प्रवृत्ते ।
शीतक्रियाप्रकरणे वरमर्णिता(नी)नां
यद्यद्बभूव चरितं कथयामि तत्तत् ॥ १ ॥
संचारितार्द्रकदलीदलतालवृन्तै-
रुत्थापितः परिजनैः शिशिरः समीरः ।
नान्तर्ज्वरं मृगदृशां शमयांबभूव
यत्नं कृतेऽपि न फलाय मृदुः स्वभावः ॥ २ ॥

मालां नवोत्पलमयीं विरहोष्मितायाः
सख्या निधाय हृदये कृतमानुकूल्यम् ।
पुष्पास्त्रमोचनपरस्य मनोभवस्य
विस्रम्भणं न वनितासु कदापि कार्यम् ॥ ३ ॥

यः कल्पितः कुचतटे विरहातुरायाः
शैत्याय सान्द्रतरचन्दनपङ्कलेपः ।
अन्तः स तापमधिकं जनयन्नयासी-
दापाकलाक्ष्यनवकर्दमलेपकक्ष्याम् ॥ ४ ॥

कस्याश्चिदीशविरहे शयनीकृतानि
पङ्केरुहाण्यपि तया सह शोषमापुः ।
अन्यार्तिनिर्वृतिमशक्नुवतां विधातुं
म्लानिः स्वयं सुमनसामुचितैव वृत्तिः ॥ ५ ॥

धारागृहं विरहवह्निशमाय तन्व्या
भूयोऽपि मुग्धपरिवारजनश्चकार ।
तस्याः सदा कुचतटे पतिताम्बुधारे
धारागृहत्वमधिकुर्वति नेत्र एव ॥ ६ ॥

हाराः पयोधरयुगे विहिताः कयापि
विश्लेषतापजुषि नीलदशामवापुः ।
संतापशान्तिकरणाक्षमतापवाद-
माधातुमिन्द्रमणिमूर्धनि वाञ्छयेव ॥ ७ ॥

विस्रम्भिता प्रियसखीवचनेषु रम्भा-
माश्लिष्यति स्म विरहोष्मशमाय काचित् ।
कस्याश्चन स्तनयुगे निहितं मृणाल-
मालीय तेन सुषुवेऽम्बुजमाननस्य ॥ ८ ॥

आपीतरक्तकपिशा किमु जालजिह्वा
ज्वाला किमद्य जगतः किमुत क्षयाग्नेः ।
आलोक्य काचिदितिसंदिदिहे सखीभि-
र्नीतानि शंभुविरहे नवपल्लवानि ॥ ९ ॥

विश्लेषिणी तरुणपल्लवक्लृप्तशय्यां
दीप्ता चितेति परिहातुमियेष काचित् ।
बाष्पोदकैस्तदुपरि प्रसरद्भिरेव
तस्या मतिभ्रममुपान्तजनो जहार ॥ १० ॥

हा हन्त कापि विधुरा रचितं सखीभिः
प्रत्यग्रपुष्पशयनं क्षणमारुरोह ।
सा मूढधीरसुनिराशजनैर्निषेव्यं
प्रायेण कामशरतल्पमिदं न वेद ॥ ११ ॥

विस्रम्भतः प्रियसखीवचनेन रम्भा-
माश्लिष्यति स्म विरहोष्मशमाय काचित् ।
तस्यास्तदूरुयुगलोपनतामवज्ञां
स्मृत्वैव तापमथ सा विपुलं ततान ॥ १२ ॥

हारादिभूषणविधिः सरसैर्मृणालैः
पात्रैर्नितान्तपृथुभिर्व्यजनोपयोगः
पद्मैश्च तल्परचना विरहातुराया-
स्तत्पद्मिनीविधिरहो विरहैकशेषः ॥ १३ ॥

कस्याश्चिदान्तरघनज्वरशान्तिहेतो-
रालीजनेन विहिते शिशिरोपचारे ।
रेजे कुचोपचितचन्दनपङ्कलग्ना
मुक्तावली बिसलतेव सरसाम्बुजस्य ॥ १४ ॥

सख्यार्पितेन कुचयोर्नवचन्दनेन
भूरिज्वरा विरहिणी कुपिता क्षणेन ।
तस्यास्तदेव घनसंनहना विलेप्तुं
काचित्कृपामृदुमना न तथा चकार ॥ १५ ॥

कस्याश्चिदीशविरहानलतापशान्त्यै
वाञ्छां विभोर्बहुमते भसिते वहन्त्या ।
भस्मात्मना परिणतः क्वथिताङ्गसङ्गा-
त्सख्या कृतः सरसचन्दनलेप एव ॥ १६ ॥

कह्लारसारघनसारहिमादि वस्तु
यत्पठ्यते हृदयतापहरं विदग्धैः ।
तद्व्यर्थमेव समभूत्कुचयोः परस्याः
किं चौषधं गिरिशशब्दितमेव शिष्टम् ॥ १७ ॥

जित्वा सरोजनिलयामलयागृहीतां
सौर्यं तपः कमलिनीनियतं परस्याः ।
पद्मैरकारि शयनं व्यजनं विशालैः
पत्रैर्मृणालरचितानि विभूषणानि ॥ १८ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये शिशिरोपचारपद्धतिरष्टाविंशी ।

---

एकोनत्रिंशी पद्धतिः ।

नारीजनो हरवियोगमहोष्मशान्त्यै
शीतक्रियां प्रियसखीषु वितन्वतीषु ।
निःशृङ्खलद्विगुणवर्धिततीव्रताप-
स्तत्कृत्यदूषणपरामिति वाचमूचे ॥ १ ॥

शीतक्रियां फलवतीं यदि कर्तुमास्था
सख्या मदीयमुखतः शृणुताभ्युपायम् ।
आनीय शंकरमिहाद्य मदीयपार्श्वे
कार्यास्ततो नु विविधाः शिशिरोपचाराः ॥ २ ॥
सत्यं त्वया प्रकटितो मयि भावबन्धः
शीतक्रियासु विरमाद्य वृथाप्रवृत्तेः ।
शक्यः कथं शमयितुं सखि निर्विकल्प-
कल्पावसानदहनश्चुलुकोदकेन ॥ ३ ॥
निर्भागधेय हरिचन्दनसौरभेण
सान्द्रेण किं तव दिगन्तविजृम्भितेन ।
बद्धादरः परुषभस्मविलोच(लेप)नेऽपि
यत्तत्पराङ्मुखमना जगदेकनाथः ॥ ४ ॥
किं चन्दनेन किमु पल्लवसंस्तरेण
किं मु(मौ)क्तिकैर्बिसगुणैरथ भूषणैर्वा ।
मूढे सखि प्रियसमागम एव यद्वा
मारज्वरस्य मरणं शिशिरोपचारः ॥ ५ ॥
प्रारभ्यते प्रतिविधिः सखि यो भवत्या
मूर्च्छासु मे हरसमानयनं विनान्यः ।
कारागृहाज्झटिति निर्गमतो जनस्य
द्वारोपरोधविधिना स शठेन तुल्यः ॥ ६ ॥
आदित्यतापसदृशं विरहोष्मतापं
बुद्ध्वैव या प्रयतते शिशिरोपचारे ।
सा त्वं पयोधिसलिलैर्वडवामुखाग्नेः
शान्तिं करोष्यपरवह्निसमभ्रमेण ॥ ७ ॥

साम्यं प्रतीत्य सखि सांप्रतमन्यरोगै-
स्तस्येदृशः प्रतिविधानमनोरथस्ते ।
सोऽयं पुनः स्मरगतो विपरीतवृत्ति-
र्यस्यैक एव जनकश्च निवारकश्च ॥ ८ ॥

क्रीडाशुकं सखि कलानि वचांस्यजस्रं
जल्पन्तमेनमपसारय शीघ्रमेव ।
अस्याश्वशिक्षणगिरं मुहुरुद्गिरन्त्या
कार्यस्त्वयापि मम संनिधितोऽपसारः ॥ ९ ॥

निर्वापणं सरसवस्तुभिरेव कर्तुं
मूढे किमस्य सखि वाञ्छसि चन्दनाद्यैः ।
किं त्वं न वेत्सि सरसेषु मनोभवाग्नि-
र्वृद्धिं प्रयाति सुतरामिति लोकवादम् ॥ १० ॥

और्वानलं जलनिधेर्नहि यानि शेकु-
र्हर्तुं दवाग्निमथवा न वनद्रुमाणाम् ।
तैर्मौक्तिकैः किसलयैरपि तैरिदानीं
शक्यः कथं शमयितुं सखि मन्मथाग्निः ॥ ११ ॥

ये शीतलप्रकृतयो भुवने पदार्था-
स्तेऽप्यद्य हन्त मयि तापकरा हिमाद्याः ।
यः सर्वसर्गनिकरे निपुणः स वेधाः
कर्तुं क्षमो न किमयं गुणवैपरीत्यम् ॥ १२ ॥

शय्यां करोषि मम तापनिवृत्तये चे-



दादित्यमैत्र्यजनितोष्ण्यगुणैः सरोजैः ।

सख्यावयोर्हृदयजीवितयोरभेदा-
न्मारज्वरो मयि घनस्त्वयि हन्त मोहः ॥ १३ ॥
यं पन्नगा निजविषोष्मनितान्ततप्ताः
श्रीखण्ठपादपमिवानिशमाश्रयन्ते ।
अन्तर्ज्वरं शमय मे सखि तस्य शंभोः
काराग्रहान्नहि वरः शिशिरोपचारः ॥ १४ ॥
नैवामुना श्रुतिकटुक्कणता शुकेन
नैव त्वयाप्यनुपमव्यवधानयापि ।
नीतौ युवां हितविधायिपदं ययैव
मन्ये मयैव सखि संप्रति मेऽपराद्धम् ॥ १५ ॥
हारस्त्वया सखि कृतो यदि मे मृणालै-
र्वीरे न केन यदि वा विदितं मयैव ।
नाथेन वक्षसि धृतो यदतो ममाशु
संतापहार्यपि भवेत्स भुजङ्गहारः ॥ १६ ॥
मत्तेव(त्तोऽव)गच्छ सखि संप्रति शीतविद्यां[1]
विश्लेषिणीमलमलं विफलक्रियाभिः ।
लोके सुखप्रदतया प्रथितानि यानि
तैर्वस्तुभिर्विरह एव परं भिषज्या ॥ १७ ॥
प्रारम्भतोऽपि पुरतः परपीडनानां
यान्त्या पदं स्वयमकारणरूढवैराः ।
यन्मां वियोगविधुरां परितप्तुकामो
निष्पीड्यते मलयजो भवतीभिरद्य ॥ १८ ॥

---

१. 'शीतविधानविद्यां' इत्यादर्श पाठः.

धन्यैव सा जनकभूर्विरहे परीता
या राक्षसीभिरनिशं न वृता सखीभिः ।
तस्या अपि प्रियसखीजनसंगमश्चे-
च्छीतक्रियामहमिवानुभवेदसह्याम् ॥ १९ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये सख्युपालम्भपद्धतिरेकोनत्रिंशी ।

---

त्रिंशी पद्धतिः ।

तापं सरोरुहदृशामचिकित्सनीयं
विज्ञाय शीतलविधाभिरपि क्षणेन ।
अन्तर्दधे करुणया किल तिग्मभानु-
स्तासां पुनश्चरितमद्य वयं वदामः ॥ १ ॥

तिग्मद्युतावपरदिक्प्रणयप्रवृत्ते
दुःखं विभाव्य रजनीमुखभावि तीव्रम् ।
कस्याश्चिदंशुमलिनं विरहातुरायाः
पूर्वं मुखं तदनु पूर्वदिशस्तमोभिः ॥ २ ॥

जालान्तरेण पवनः प्रविशन्कयापि
रुद्धो मुहुर्दृढकवाटसमर्पणेन ।
लुप्ते यथात्मनि तथा विशति स्वगेहे
मन्दानिलेन विरहिण्यकरोदवज्ञाम् ॥ ३ ॥

कस्याश्चिदस्तमयलम्बितपाटलिम्ना
पूष्णा सहैव पतता दिशि पश्चिमायाम् ।
सख्या वियोगपरिहारनिरुद्यमायाः
कोपात्पपात शनकैररुणः कटाक्षः ॥ ४ ॥

मीर्ति यथैव विदधे कुमुदैर्हसद्भि-
रासूचितादयतटान्तरितस्वरूपः ।
वामभ्रुवो विरहविज्वरिताशयायाः
प्रादुर्भवन्नपि पुनर्न तथा हिमांशुः ॥ ५ ॥
आलम्बते दिनमणिः सखि पश्चिमायां
सद्यः कयापि वि(प्यभि)हिता हरमानयेति ।
काचित्सरःसरसिजं मुकुलायमान-
मालोक्य पाणिकमलं मुकुलीचकार ॥ ६ ॥
यः पावकप्रणयिभिर्दिवसे पृथिव्या-
माधायि चण्डमहसः किरणैरनेकैः ।
सर्वोऽपि हन्त निशि मन्मथपीडितायाः
कस्याश्चिदाशु हृदयं स विवेश तापः ॥ ७ ॥
या तुङ्गसौधवलभीशयिता वियुक्ता
या तत्समीपगतमङ्गलदीपिका च ।
सख्यः प्रमादमभिशङ्क्य तयोर्वितेनु-
र्जालप्रविष्टपवनात्सममेव रक्षाम् ॥ ८ ॥
काचित्सहायरहितां निशि चक्रवाकीं
दृष्ट्वा सतीष्वपि सखीष्वनुरागिणीषु ।
तस्यै शनैरकथयन्निजकामपीडां
नूनं दशासदृशता प्रणयस्य हेतुः ॥ ९ ॥
आ × × कार्यकरणो निखिलोऽपि लोको
यद्गूहते झटिति निह्नुतदिग्विभागम् ।
मीमं तमस्तदपि कापि ननन्द तस्मा-
द्यस्माद्वियोगमगलस्थितमाततान ॥ १० ॥

काचिद्विलोक्य कमलानि निमीलितानि
　　विश्लेषिणी विकसितानि च कैरवाणि ।
शोकः सतां परविपद्यसतां च हर्षो
　　धात्रैव सृष्ट इति कापि विनिश्चिकाय ॥ ११ ॥
गौरीपतेरभिसृतिं सुदृशा कयापि
　　कर्तुं प्रसाधनमशङ्कितमाचरन्त्या ।
नाबन्धि रत्नरशना विपुले नितम्बे
　　वाचालता गुणवतामतिदूषणाय ॥ १२ ॥
संध्यानभश्चरमसीमनि कापि पांसुं
　　संसर्पिणी विरहिणी सहसा निरीक्ष्य ।
मेने जगत्त्रितयनिर्जयवैजयन्तीं
　　कामस्य रत्नपटिकां भवविह्वलैव ॥ १३ ॥
इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये प्रदोषचरितपद्धतिस्त्रिंशी ।

---

एकत्रिंशी पद्धतिः ।

प्राप्तः प्रदोष इति वीक्ष्य निरर्गलेन
　　पुष्पायुधेन भृशपीडितमानसानाम् ।
वामभ्रुवां विरहतापविजृम्भितानि
　　वाक्यानि वक्तुमभिवाञ्छति चेतना मे ॥ १ ॥
कृत्वा स्ववेणुजनितं स्वयमेव गीतं
　　विध्यन्ति मुग्धहरिणान्विजने पुलिन्दाः ।
आश्चर्यमुच्चलति गोपतिवंशगीतं

　　कामस्तु विध्यति वियोगिजनं पृषत्कैः ॥ २ ॥

तुभ्यं नमो भवतु वासरलोपसंध्ये
नान्तःश्लथामनुकरोषि जटां शिवस्य ।
आशास्महे वयममी तत एव हेतो-
र्मा भूत्कदापि शशिनः शकलेन हीना ॥ ३ ॥
नेयं निशा हतनिशाचरयोषिदेषा
हन्तुं वियोगविधुरं जनमाजगाम ।
अस्या मुखे सपदि यः प्रथते प्रकामं
रागः स कोपजनितो न तु सांध्यरागः ॥ ४ ॥
संधुक्षयत्यविरतं हृदयं मदीय-
मन्तः प्रविश्य मदनाग्निरसौ समीरः ।
अस्मिन्नमुष्य विषमास्त्रविमुक्तबाणै-
रापाद्यमानविवरे सुकरः प्रवेशः ॥ ५ ॥
यः पश्चिमे क्षणमदर्शि नभःप्रदेशे
रागः क्व यात इति संप्रति मे व(वि)शङ्का ।
सत्यं हरेण विरहे हरिणेक्षणानां
चित्तेषु पुष्पधनुषा कृतसंविभागः ॥ ६ ॥
आसन्नचन्द्ररमणप्रणयावि(व)लिप्ता
कामव्यथां मनसि कैरविणी करोतु ।
अम्भोजिनि त्वमपि संप्रति वल्लभेन
विश्लेषिणी मयि कथं रुजमादधासि ॥ ७ ॥
दग्धुं जगत्त्रयमयं विकलोऽपि वह्नि-
रुज्जृम्भते वियति सांध्यमहश्छलेन ।
इत्थं न चेत्किमिति संप्रति वारि विप्राः
सभ्रममञ्जलिमिषाज्जलममी क्षिपन्ति ॥ ८ ॥

यस्य प्रयाणसमये प्रकटानुरागः
सोऽवश्यमेष्यति पुनः सवितेति सुप्तिम् ।
अम्भोजिनी व्रजति सुप्तिकथा कथं स्या-
न्निःसङ्ग एव गिरिशे मम भक्तिमत्याः ॥ ९ ॥

साध्वेष वासरपतिर्दिशि पश्चिमायां
तेजःक्षयद्युतिवशेन बभूव रक्तः ।
हा हन्त पातयति सा तमियं वराङ्गी
कस्यापदे जगति नान्यतरानुरागः ॥ १० ॥

मन्येऽहमित्थमुदयारुणचन्द्रनाम-
स्वीकारिणः प्रलयकालहुताशनस्य ।
धूमोऽयमग्रजनितस्तिमिरच्छलेन
विश्लेषिसार्थनयनाश्रुनिपातहेतुः ॥ ११ ॥

एकस्य रात्रिमुखवेषविषद्रुमस्य
संजातसाध्यकिरणारुणपल्लवस्य ।
आगामिपूर्णशशिबिम्बमहाफलस्य
तारागणं विगणयामि नवप्रसूनम् ॥ १२ ॥

अत्युच्छ्रितादनिल ते मलयात्प्रसूति-
र्नित्यं यतः परिचयं सुमनोभिरेव ।
दाक्षिण्यवानिति जगद्विदितोऽसि तस्मा-
न्मा जातु जारसरणिं व्रज नीचसेव्याम् ॥ १३ ॥

पूर्णेन्दुरत्र मरुदत्र हिमाम्बुगर्भो
गन्धोऽयमत्र मुकुलस्य विजृम्भमाणः ।
नाम प्रदोष इति दोषसमग्रभावा-
त्स्रष्टा यथार्थमकरोद्रजनीमुखस्य ॥ १४ ॥

धन्या हि सा भगवती दिवसान्तसंध्या
यामागतां भुवि सुवीक्ष्य पिनाकपाणिः।
विश्लिष्टबन्धनजटाभरणः स हर्षा-
गौर्याः समक्षमपि नृत्यति वीतशङ्कः ॥ १५ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये प्रदोषोक्तपद्धतिरेकत्रिंशी।

---

द्वात्रिंशी पद्धतिः।

कंदर्पशासनविलङ्घिजनेषु रूढ-
रोषादिवेन्दुमुदयस्थमवेक्ष्य ताम्रम्।
जज्ञे हरेण विरहे वनिताजनस्य
यच्चेष्टितं तदधुना कथनीयमास्ते ॥ १ ॥

उष्णायमानमुदयारुणमिन्दुबिम्बं
काचिद्रवेर्विरहिणी न शशाक भेत्तुम्।
तस्या विवेकमतिदायितया तदानीं
तस्योपयोगमहितं शशलाञ्छनत्वम् ॥ २ ॥

अन्या विहाय मदनातुरजीविताशां
जातस्पृहा मरणशब्दितमङ्गलाय।
लब्धः शिवो भवतु मे परजन्मनीति
चन्द्रातपे विरहिणी सहसा पपात ॥ ३ ॥

आलोक्य काचिदुदयारुणमिन्दुबिम्बं
विश्लेषिणामविषहं शिशिरं परेषाम्।
द्रोही न वा खलु ममेति जनं बिभत्सोः
कामारिमुग्रपरशुं गणयांचकार ॥ ४ ॥

ज्ञातो जनैर्विरहतापजुषः परस्य
नेत्रद्वयस्य नलिनस्य च जातिभेदः ।
पद्मेषु चन्द्रकिरणैर्मुकुलीकृतेषु
यज्जागरूकमभवन्निशि नेत्रयुग्मम् ॥ ५ ॥

चूडामणिः पशुपतेरिति जृम्भितास्था
तापावहो विरहिणामिति जातभीतिः ।
चन्द्रस्य काचिदुदये विधुरा निजाक्ष्णो-
रुन्मीलनेऽपि न शशाक निमीलनेऽपि ॥ ६ ॥

भिक्षाटनं पशुपतिः कृतवानिहेति
यां हातुमह्नि गलितेऽपि हि न क्षमाभूत् ।
तां वीथिकां शशिमयूखभयाद्विहाय
छायेव कापि शनकैर्वसतिं विवेश ॥ ७ ॥

कस्याश्चिदीशविरहव्यथिताशयायाः
कामं वदन्तु मुखमेव हि चन्द्रकान्तम् ।
तस्या दृशोर्युगलमप्युदये हिमांशो-
र्निर्दिश्यमानबहलोदकमिन्दुकान्तम् ॥ ८ ॥

यावान्दिनेशपतने विरहातुराया-
स्तावान्हिमत्विषि मनागुदितेऽपि तापः ।
पातो यथा परहिताय तथार्तिभाजां
खेदाय नूनमुदयो मलिनाशयस्य ॥ ९ ॥

पुष्टं मनाग्विरहिणी स्तनमिन्दुपादैः
काचिद्ददौ प्रियसखीमुखमारुताय ।
प्रारब्धमन्यदपरं फलितं क्षणेन
जज्वाल हन्त हृदये मदनाग्निरस्याः ॥ १० ॥

एका शशाङ्ककिरणोपनिपातभीत्या
वातायनान्तरपिधानकृतप्रयत्ना ।
आमीलनव्यपहृतेन्दुकरप्रयत्ना-
लक्ष्म्याः सरोजवसतिं मनसा ननन्द ॥ ११ ॥
स्पष्टं मुहुर्भवनजालकृतप्रवेशै-
रिन्दुः करैर्विरहिणीं व्यथयांचकार ।
स्प्रष्टुं जडप्रकृतिरिच्छति कामिनीना-
मङ्गं मनःस्थितिमनाकलयन्करेण ॥ १२ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये चन्द्रोदयपद्धतिर्द्वात्रिंशी ।

---

त्रयस्त्रिंशी पद्धतिः ।

चन्द्रोदये विरहविह्वलमानसानां
या निर्गता भणितयो वदनाद्वधूनाम् ।
माधुर्ययोगपुनरुक्तसुधान्वितानां
तासामिहास्मि कथनेन विदग्धमान्यः ॥ १ ॥
किं कृत्यमद्य सखि पश्य जगत्समस्तं
व्याप्नोति सान्द्रमपहृत्य निशान्धकारम् ।
त्रैलोक्यसंहरणकर्मणि कामशत्रोः
कोपाट्टहास इव कोऽपि शशिप्रकाशः ॥ २ ॥
एतस्य चन्द्रहतकस्य कठोरभावं
सख्यस्तदेव गमयेति विकल्पमेव ।
अम्भोनिधेरखिलरक्षणजागरूको
जग्राह यत्पशुपतिर्गरलेन साकम् ॥ ३ ॥

अन्येषु जन्तुषु सुधासहजत्वमिन्दो
　　व्यक्तीकरोषि किरणैरतिशीतपातैः ।
अस्मादृशेषु तु पुनर्विधिवञ्चितेषु
　　तैर्दुःसहैर्गरलसोदरभावमेव ॥ ४ ॥

वेधाः सुखी भवतु सांप्रतमात्मशिष्टं
　　कृत्वा जगत्त्रितयमिन्दुमयानलेन ।
सद्योनिमीलितजनार्दननाभिपद्मे
　　गूढं स्थितस्य न हितस्य शशाङ्कभीतिः ॥ ५ ॥

किं राहुणा कवलितः किमु चन्द्रमौलेः
　　सर्वात्मना मुकुटभावमलंकरोति ।
निर्मूल एव किमु शीकरतः प्रलीनो
　　यत्तस्य राज्यमयमुष्णकरः करोति ॥ ६ ॥

पूर्तिं विहाय निहतद्युतिमद्य शोच्यं
　　कार्श्यं तदेव कुमुदैकपते भजस्व ।
यस्मिंस्त्वया निखिलवन्दनहेतुभूतं
　　प्राप्तं पुरार्दनकपर्दशिखामणित्वम् ॥ ७ ॥

अङ्गारगर्भकरमिन्दुमिमं पिधाय
　　यादृच्छिकानुगमने....कुरु मेघ रक्षाम् ।
कालप्रतीक्षणपरो भुवनोपकारे
　　जीमूतजातिरिति मास्तु तवापवादः ॥ ८ ॥

अन्तःकलङ्कमुदयाहितशोणभाव-
　　मालोचयामि सखि संप्रति चन्द्रबिम्बम् ।



१. पुरार्दनः पुरारिः शिवः.

अङ्गारचक्रमुपशान्तकरालमन्तः
कामस्य दु(द)ग्धवपुषस्त्रिपुरान्तकेन ॥ ९ ॥
किं क्षेममद्य सखि नः कथयाम्बुराशेः
से(सो)यं कलाभिरखिलाभिरुदेति चन्द्रः ।
शैलात्मजावपुरभेदफलां स्मराज्ञा-
मेकैव वर्तयति यस्य कला हरेऽपि ॥ १० ॥
शाणोपलं मकरकेतनसायकानां
पूर्णेन्दुबिम्बमिदमालि वितर्कयामि ।
नो चेत्तथा कथमिदं निशितत्वमेषा-
मस्मिन्नुदञ्चति कथं च पुनः क्षयोऽस्य ॥ ११ ॥
इन्दुच्छलेन जलधेः प्रलयानलोऽय-
मुज्जृम्भते सखि वियोगिजनक्षयाय ।
मूर्ध्ना बिभर्ति सरितं परमेश्वरोऽपि
कालेयचन्द्रितकलापरितापभीतः ॥ १२ ॥
अद्यादिमं यदि स संप्रति राहुरिन्दुं
दिष्ट्या भवेद्विरहिणामपि जीवलाभः ।
भुञ्ज्यात्सदैव यदि भूरिफलं परेषां
मन्ये कदाचिदपि हन्त खलो न भुङ्क्ते ॥ १३ ॥
पात्रं करालगरगर्भितमेव सत्यं
नैवेन्दुबिम्बमिदमालि यतश्चिराय ।
उत्कण्ठते मम मनः शिवकण्ठमेव
यः कालकूटगरलादखिलं ररक्ष ॥ १४ ॥
हृद्यानि मीलयसि हन्त सरोरुहाणि
हा चन्द्र जृम्भयसि संप्रति कैरवाणि ।

युक्तं तवैतदुभयं मलिनाशयस्य
भव्यावधीरणमभव्यसभाजनं च ॥ १५ ॥

आलोकितं रमणभूषणमङ्गनानां
तापं वियोगसमये हरतीति वादः ।
चूडामणिः पशुपतेरयमिन्दुरार्धिं
हा हन्त वर्धयति मे विधिना शठेन ॥ १६ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये चन्द्रोदयपद्धतिस्त्रयस्त्रिंशी ।

---

चतुस्त्रिंशी पद्धतिः ।

अव्याजदुस्तरनिशीथपयोधिमध्ये
वैरायमाणविधिनैवनिपातितानाम् ।
एणीदृशां हरमहाप्लवकाङ्क्षिणीनां
दौत्यत्वयानि(?) चरितानि जनः शृणोतु ॥ १ ॥

कामातुरो नहि निरूपयति स्वदैन्यं
काचित्समस्तवनिताजनपूजनीया ।
दूत्या मुहुः सकृदपि त्रिपुरान्तकस्य
कण्ठग्रहाय चरणग्रहणं चकार ॥ २ ॥

यः पाण्डुरःस्वयमथाब्धिविषं निपीय
नैल्यं बिभर्ति भुवनत्रयरक्षणाय ।
दौत्यं तथाविधतथा(या)र्हसि शंकरस्य
तस्यैव कापि नवमम्बुधरं ययाचे ॥ ३ ॥

कल्याणबान्धवपरो जगतीह मातु-
रन्यो जनोऽयमिति जीवसखीमपेक्ष्य ।

काचित्स्वमातरमयाचत शंभुदौत्यं
किं नैव कारयति कामभवो विकारः ॥ ४ ॥
सामोक्तिभिः प्रियसखीमनुचर्य काचि-
द्दौत्याय वाच्यमनया परिपृच्छ्यमाना ।
तूष्णीमजातनिजसंगमने वृषाङ्के
वक्तव्यहानिपरिदूयमना बभूव ॥ ५ ॥
यामेव जीवितसखीं परिरभ्य गाढ-
मीशोपकण्ठगमने त्वरयांचकार ।
तां प्रस्थितां सपदि वीक्ष्य रुरोध काचि-
दीशान्तकान्यवनितागमनासहिष्णुः ॥ ६ ॥
संदेशगर्भितपुटे स्मरलेखपत्रे
विन्यस्तसान्द्रनवचन्दनपङ्कमृत्के ।
शंभोर्भविष्यति करःप्रणयीति काचि-
न्मुद्रां व्यधाद्विरहिणी कुचचूचुकेन ॥ ७ ॥
मा गास्त्वमद्य हरसंनिधिमस्मदर्थे
प्राणाधिका यदसि मे तदिहासितव्यम् ।
प्राणाः प्रयान्तु सुखमद्य ममेति काचि-
त्स्नेहोक्तिभिः प्रियसखीं त्वरयांचकार ॥ ८ ॥
न प्रेषिता प्रियसखी गिरिशस्य पार्श्वे
सा स्त्रीति शङ्कितधिया सुदृशा कयापि ।
मत्वा नपुंसकमिति प्रहितं मनोऽभू-
त्तच्चापि तत्र रमते किमियं विधत्ताम् ॥ ९ ॥
कृत्वाधरं रचितचिह्नमलक्तकेन
तस्याः कुचाग्रमपि कुङ्कुमकर्दमेन ।

काचिद्गभीरहृदया हरसंनिधानं
गन्तुं पुनः प्रियसखीं वनिता न्ययुङ्क्त ॥ १० ॥
योऽपीदृशं वितनुते परकीयमिष्टं
तादृक्फलं स फल(लभ)ते पुनरित्यभिज्ञाम् ।
मामद्य योजय हरेण विधाय दौत्य-
मित्याजगाद विधुरा निशि चक्रवाकीम् ॥ ११ ॥
रागः शठो नियतमन्यतरानुरागः
स्वस्थः स एव पुरुषस्य निरङ्कुशस्य ।
मानग्रहो हि मरणाय वधूजनस्य
व्याचक्ष्व नाथमिति कापि जगाद दूतीम् ॥ १२ ॥
वार्ताहरीमनधिगम्य रहः शुचान्या
तापोऽर्जिते स्तनतटेऽश्रुजलं मुमोच ।
तस्मै हृदि स्थितिमते स्थितिमेतदीयां
वक्तुं प्रविष्टमिव तन्नहि तत्र दृष्टम् ॥ १३ ॥
संदेशमीशविषयं स्वयमेव काचि-
द्यस्मिन्विलेखितुमुपाक्रमताञ्चिताक्षी ।
पत्रं तदाशु धृतकज्जलबाष्पपातैः
प्रागक्षरार्पणविधेर्मलिनीचकार ॥ १४ ॥
किं किं परिभ्रमसि संप्रति कुन्तले मे
पुष्पोज्झितेऽपि मधुपार्थितया तथैव ।
आनीय शङ्करमिह द्रुतमाप्तकामो
भूया इति भ्रमरमाह शुचेव काचित् ॥ १५ ॥
दीर्घं मयैव कलजल्पितशिक्षणं ते
तद्दक्षिणावितरणस्य स एव कालः ।

कालान्तकाय कथया मम कामपीडा-
मित्यन्तरङ्गमपरा शुकमाबभाषे ॥ १६ ॥
कर्णावतंसकुसुमाश्रयणापदेशा-
त्तस्यैव कण्ठविवरं प्रतिपद्य सद्यः ।
वार्ताहरो भव हराय ममेति काचि-
दात्मालकान्तिकचरं भ्रमरं बभाषे ॥ १७ ॥
विश्लेषदुःखशमनाय सरोरुहिण्याः
संध्या प्रयान्तमनुगम्य कठोरभासम् ।
अध्यास्ततेन नं विनेति कथाप्रसङ्गा-
त्सख्युः पुरो विरहिणीं वचनं जगाद ॥ १८ ॥
आहूय दौत्यगमनाभिमुखीं वयस्यां
संदेशमीशविषये बहु वक्तुकामा ।
तत्पार्श्वमेष्यसि यदीत्यसमापितोक्ति-
र्बाष्पैरवोचदपग कथनीयशेषम् ॥ १९ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये दूतीप्रेषणपद्धतिश्चतुस्त्रिंशी ।

---

पञ्चत्रिंशी पद्धतिः ।

अस्मादृशामसुलभस्य विभोरशक्ये
दौत्ये पदे युवतिभिर्विनियोजितानाम् ।
तं व्यापिनं गगन एव विधाय लक्ष्यं
दौत्योचितानि वचनान्यभवन्सखीनाम् ॥ १ ॥
कालान्तकोऽयमिति विश्वजनप्रसिद्धिं
सत्यां विधातुमथ [illegible]रीशाभिलाषः ।

योे बाधते त्वयि दृढप्रणयां सखीं मे
　　कालं तमद्य झटिति क्षपय क्षपाख्यम् ॥ २ ॥
सख्यां वसन्तसखबाणगणार्दितायां
　　तां किंचिदत्र करुणां कुरु चन्द्रमौले ।
मा वा न नः क्षतिरतो मरणं वरिष्ठं
　　जीवस्थितेस्त्वदनुरागनिमित्तमस्याः ॥ ३ ॥
किं विस्तरेण शृणु शंकर संग्रहोक्तिं
　　वक्तव्यवस्तुनि मया सति पृच्छ्यमाने ।
नैवाक्षरैः सपदि कण्ठगतैर्मृगाक्ष्याः
　　प्राणैरभाणि भवितव्यमशेषमेव ॥ ४ ॥
गौरीसखस्य तव मा भवतु प्रसक्ति(त्ति)ः
　　कल्याणकांममितरासु मृगेक्षणासु ।
कण्ठे चिरं रुचिमती गरनीलमूले
　　भूयात्सदैव करुणाधिकवल्लभासु ॥ ५ ॥
शंभो तदा त्वदवलोकनपुण्यकाले
　　याभ्यामभून्निपतितः प्रथमाश्रुपूरः ।
शोकाश्रुणा परिभवोऽपि किमायताक्ष्या-
　　स्तस्यास्तयोर्नयनयोरनुरूप एव ॥ ६ ॥
सर्वज्ञता निरुपधिश्च कृपापि सिद्धे-
　　रव्याहतत्वमिति नाथ गुणास्त्रयस्ते ।
तत्र त्रये नियतमन्यतमस्य लोप-
　　स्तस्या न चेदिह विधास्यसि जीवरक्षाम् ॥ ७ ॥
पाण्डुत्वमावहति भस्मकृतिं विनाङ्गे
　　धूमं विना च नयनाश्रुनिपातहेतुः ।

शंभो विना ज्वलति चेन्धनमद्भुतं त-
त्तस्यास्त्वदीयविरहप्रचितो हुताशः ॥ ८ ॥
याचे भवन्तमिदमद्य जटाकलापे
पूर्णं निधेहि शशिनं विकलं विहाय ।
दैन्यं च ते विकलचन्द्रपरिग्रहोत्थं
तस्याश्च मा भवतु दुर्विषहोऽद्य तापः ॥ ९ ॥
यत्तादृशं मयि तथा प्रणिपातदैन्यं
सख्या गिरीश न हितेऽत्र निदानमेतत् ।
सद्यस्त्वदानयननैपुणरूढयैव
यन्निद्रया निशि विभो प्रणयन्व्यपायः ॥ १० ॥
त्वां याचते मम सखी निशि मन्निकेत-
मागम्यतामिति पुरार्दन मन्मुखेन ।
नातः परं मृगदृशामभिमानभङ्गो
लभ्येत चेदभिमतं ननु सोऽपि सह्यः ॥ ११ ॥
मध्यस्थितिं तव मनोभवपीडितायां
याचे न पक्षपतनं चिरजीवसख्याम् ।
एतावतैव हि भविष्यति काम्यसिद्धि-
र्माध्यस्थ्यमातुरजनेष्वपि पक्षपातः ॥ १२ ॥
आश्लेषणं तव सुदुर्लभमस्तु शंभो
सख्याः प्रयच्छ ललितं तव बाहुमूलम् ।
तस्या गले विनिहिता(?)मसवः प्रयाणे
प्रारम्भिणी(?) पुनरिमां न विलङ्घयेयुः ॥ १३ ॥
गौरीभुजार्पणमहावलयाहिधन्ये
कण्ठे न तेऽन्यवनिताभुजसङ्गमोर्हः ।

तत्र स्वमाहितमवेक्ष्य भुजंगमेनं
तस्या भुजोऽपि घटतामिति नाथ याचे ॥ १४ ॥

कुर्वन्तु तावदपरे विभवः परेषां
याच्ञाविभञ्जनमिदं तव नैव युक्तम् ।
शंभो यतस्त्वमपि वेत्सि विधाय भिक्षां
नित्यं सुदुर्विषहयाचनभङ्गपीडाम् ॥ १५ ॥

त्वत्संश्रितापि भवतैवमुपेक्षिता चे-
त्सा नः सखी वरद हन्त तवैव हानिः ।
यन्नीलिमा तव गले सहसैव जह्यात्
कारुण्यहेमनिकषोपलशैललक्ष्मीम् ॥ १६ ॥

सा पद्मचारुनयना विषमेक्षणस्त्वं
सा कुञ्चितालकभरा हर धूर्जटिस्त्वम् ।
सा सद्गुणैकवसतिर्गुणवर्जितस्त्वं
तस्यास्तथापि किमिदं शिव दुर्लभोऽसि ॥ १७ ॥

या वीक्ष्य नाथ गरलं तव कण्ठमूले
या पन्नगेन्दु(न्द्र)मपि तत्र पुरा निनिन्द ।
जातस्पृहैव भगवन्भवतीयमात्रे(र्ता)
पापादियं न सहते विरहं त्वदीयम् ॥ १८ ॥

कामं वृथा भवतु मे त्वयि कामदौत्यं
प्रष्टव्यमेतदभिधेहि पिनाकपाणे ।
तस्यास्तथा स्मरशरैर्विहितप्रहारे
चित्ते वसन्नपि कथं त्वमकामविद्धः ॥ १९ ॥

गङ्गापयः सकलमेव कपर्दकोणे
सद्यो विलीनमिति नाथ कियान्मदस्ते ।
सामर्थ्यमस्ति यदि ते नयनाम्बुपूरः
सख्यास्त्वदीयविरहप्रचितो निवार्यः ॥ २० ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये दूतीवचनपद्धतिः पञ्चत्रिंशी ।

---

षट्त्रिंशी पद्धतिः ।

विश्लेषिता युवतयो विरहे त्रियामां
निन्युः सुदुःसहवियोगनितान्तदीर्घाम् ।
तेषां विचक्षणवचोभ्युपवर्णनेन
वाणीमिमां वयममी चरितार्थयामः ॥ १ ॥

कस्याश्चिदिन्दुमलयानिलचक्रवाक-
केङ्कारसंतमसकैरवसौरभाद्यैः ।
विश्लेषवंशमथनैर्निचिते निशीथे
मूर्च्छाप्रसादकृत एव हि जीवलाभः ॥ २ ॥

प्रत्यग्रपुष्परचिते शयने न शिश्ये
नासिष्ट कुत्र च न चैव सखीं बभाषे ।
नापि क्वचित्स्थितिमती न ययौ न विद्मः
किं किं विधायं विधुरा रजनीमनैषीत् ॥ ३ ॥

चन्द्र क्षयं भव मुहुर्भुजगामिषं स्याः
भूयाः कलङ्कनिलयो जलतां भजस्व ।
कस्याश्चिदित्यपुनरुक्तमुदीरिताभिः
शापोक्तिभिः सह निशा विरतिं प्रपेदे ॥ ४ ॥

तच्चिन्तनैस्तदनुबन्धिकथाप्रसङ्गै-
स्तत्संगमानुगुणकर्मनिरूपणाभिः ।
तन्नामभापिशुकसंवहनैश्च काचि-
द्रात्रिं निनाय रहिता परमेश्वरेण ॥ ५ ॥

पर्याप्तशीतकर····मण्डलतालवृन्ता
नीरन्ध्रसंस्तवदृढप्रणया सखीव ।
कस्याश्चिदीशविरहव्यसने प्रवृत्ते
पार्श्वं न जातु विजहौ विपुला त्रियामा ॥ ६ ॥

संतप्तमूर्तिरतिशीतलराजरम्भा
शंभोस्ततार रजनीसरितं वियुक्ता ।
किंतु च्युते दयितपोतदृढोपगूढे
यत्स्यान्न भावि पुनरुत्तरणं वधूनाम् ॥ ७ ॥

याञ्चोक्तिभिश्च गमनाय गतिप्रसक्ता-
माहूय शंकरवशीकृतिशास्तिभिश्च ।
दूतीं प्रकृत्य पुनरेव पुनः कृताभि-
र्याता निशा मृगदृशो न तु सा प्रयाता ॥ ८ ॥

पौष्पैः शरैः प्रहरतो रतिनायकस्य
पुष्पास्त्रविद्धवपुषश्च मृगेक्षणायाः ।
प्रायेण नैव निशि सुप्तिरभूत्तथापि
मूर्छासु सा विरहितापि निमीलिताक्षी ॥ ९ ॥

किं कालरात्रिरथवा किमु कालदूती
किं पापसंहतिरनेकविधप्रवृत्ता ।
किं मर्मकृन्तनकरी शितहेतिरेषे-
त्येका व्यलङ्घयदपोक्तिभिरेव रात्रिम् ॥ १० ॥

चन्द्राभिधानवडवाग्निमदृष्टपारं
कंदर्पकेतुमकरभ्रमणातिभीमम्
अच्छिन्नबन्धहरचिन्तनसेतुनैव
काचिद्गभीररजनीजलधिं ततार ॥ ११ ॥

शैत्यार्थिनी कुसुमतल्पमवाप्य पूर्वं
पश्चात्प्रवालशयनं तदपि प्रमुच्य।
श्रीखण्डपङ्कसरसीमपि शैत्यहेतोः
काचिद्गतागतिनयैश्च निशां निनाय ॥ १२ ॥

वापीमवाप नवचन्दनपङ्कलिप्ता
प्रत्यग्रपुष्पशयनात्पुनरेतदस्याः।
इत्थं द्वयोरपि तयोररतिं वहन्ती
काचिद्गतागतगतेन निशां निनाय ॥ १३ ॥

यस्याः क्षणादपगतिं हरविप्रयुक्ता
यस्याश्च काचन समागममाशशंस
न प्रस्थिता च रजनी न समागता वा
निद्रा विधातरि विरोधिनि नेष्टसिद्धिः ॥ १४ ॥

एकक्षणप्रतिस.....दिवसाः शिवेन
योगान्निशा च विरहादपि नाम दीर्घा।
ताभ्यां विवर्जितमहो दिवसक्षपाभ्यां
देशं विचिन्त्य विरहिण्यपरा चचार ॥ १५ ॥

आलम्बितैः प्रियसखीभिरथात्मनापि
पर्यायतः क्षणमशक्तिवशेन मुक्तैः।
बाला शिलामिव विशालतमां कथंचि-
काचिद्गुणैः गुरुनिशां रजनीं चकर्ष ॥ १६ ॥

शक्येतराय गिरिशाय रुचैर्वचोभि-
　　र्दौत्याय जीवितसखीमपरा न्ययुङ्क्त ।
प्राणव्यये विरहिणी रजनीमशेषां
　　तस्याश्चिरायितवशेन चिरायते स्म ॥ १७ ॥

[1]गौरीपतेरथ च चौर्यमपेक्ष्य काचि-
　　द्रात्रिं निनाय निखिलामपि जागरेण ।
लब्धेऽपि रक्तकुमुदिन्यवितन्द्रगङ्गा
　　जागर्ति तस्करजनो निशि पु[2]ष्कलोऽपि ॥ १८ ॥

काचित्क्षपां क्षपयितुं विपुलां सखीभिः
　　संप्रस्तुतस्य वृषवाहनकीर्तनस्य ।
आकर्णनेन चरमेतरयोः प्रवृत्तां
　　संध्यां द्वयोरचलयोर्युगपद्ददर्श ॥ १९ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये रजनीयापनोक्तिपद्धतिः षट्त्रिंशी ।

---

सप्तत्रिंशी पद्धतिः ।

दीर्घां निशां शमयितुं विरहे हरेण
　　निद्राप्रसक्तिरहितस्य वधूजनस्य ।
नानाविधानि चरितानि सखीं प्रकृत्य
　　जातानि यानि कथयाम्यहमद्य तानि ॥ १ ॥

आहूत एव न समीपमुपैति भिक्षां
　　गृह्णाति नैव मुहु····रर्थयते तथापि ।

---

१. "गौरीपतेरधरचौर्य" "रक्तकुमुदिन्यपि तादृगासीत्" इति पुस्तकान्तरे वर्तते ।　२. पुष्कलायाम् ।

धत्ते चिरादनुसृतोऽपि न चाभिमुख्यं
भिक्षुर्मृगाक्षि वद कोऽयमदृष्टपूर्वः ॥ २ ॥
भिक्षाप्रदानसमये न मया तदानी-
मालिङ्गितोऽभवदहं पुनरद्य दूये।
चिन्तामणिं करतलस्थमुपेक्षयोर्व्यां
सद्यो निपात्य मृगये तमितस्ततोऽपि ॥ ३ ॥
भिक्षातिसर्जनमिषादहमिन्दुमौले-
र्वक्षः स्तनेन मम योजयितुं प्रवृत्ता।
अत्रान्तरे श्वसितमूर्जितमुत्ससर्ज
हारो हरस्य सखि भाग्यविपर्ययेण ॥ ४ ॥
भिक्षां ददातु भवतीत्युदिते शिवेन
तां दातुमोदनमयीं मयि सोद्यमायाम्।
यत्तस्य गर्भितरतार्थरहःप्रवृत्त-
मन्दस्मितं सखि न मे हृदयादपैति ॥ ५ ॥
गात्रं विकर्शितमभूद्गिरिशानवाप्त्या
वृद्धास्त्वमीक्षणमदर्शनतः शिवस्य।
लब्ध्वा शिवं सततमाहितसंनिधानं
संतप्यते सखि कथं हृदयं मदीयम् ॥ ६ ॥
यद्यागमिष्यति मदीयगृहोपकण्ठं
भिक्षाटनाय गिरिशः समनन्तरेऽपि।
तस्योपगूहनविधिर्भवितव्य एव
दातुः प्रदानसमये स्ववशो हि भिक्षुः ॥ ७ ॥
नाभ्ये कृतश्रममिवास्य पदं गतेन
देहीति दीनपदमप्यनुपक्त... ।

पत्रावलम्ब्यपि करः करणप्रवीणः
प्रायेण कोऽपि नट एव न भिक्षुरेषः ॥ ८ ॥
इक्षुर्धनुर्मधुकरावलिरेव मौर्वी
शस्त्राणि पञ्च नवपुष्पमयानि कस्य ।
लोकत्रयं विजयते मदनस्तथापि
मन्ये जयाय निजधैर्यमतन्त्रमेतत् ॥ ९ ॥
पुष्पायुधो गिरिशनेत्रहुताशनेन
प्राग्भस्मसात्कृत इति स्म कथा वृथैव ।
आलिङ्गितोनलमसुष्य तथोपदिष्टो
मन्ये वियोगिजनदाहविधिप्रकारः ॥ १० ॥
बद्धा जटा नयनमप्यसमं चितैस्त-
न्नीतं वपुश्च भसितैरतिधूसरत्वम् ।
एवं य·········· ····नोह्····भैक्षचारे
कान्तीविगूहितमहो विबभूव शंभुः ॥ ११ ॥
तां पार्वतीं मनसिजः परमेश्वरेण
यो येन योजयितुमक्षमतां प्रपेदे ।
तेनैव मां वशयितुं यतते मुधैव
कामोऽपि कामुकवदेव विवेकहीनः ॥ १२ ॥
वीथ्यां तथा पुरत एव जनस्य शंभुं
कण्ठे ग्रहीतुमभवं विहितोद्यमेव ।
लज्जा रुरोध सखि मां सहसा किमन्य-
स्त्रीत्वेन साप्यभवदेव हि मे सपत्नी ॥ १३ ॥
स्त्रीजातिमात्रहृदयार्तिकरे वृषाङ्के
कंदर्पदौत्यमनुतिष्ठति केवकस्याः(?) ।



क्रीडाशुकः शरणमन्यतमो ममायं
लोके पुनः फलितमात्रवचा न दूतः ॥ १४ ॥
साक्षात्पुरस्थितमपोह्य वृषाङ्कमद्य
चित्रे निवेश्य परिरम्भणमाचरन्ती ।
भित्त्वा विहारसरसीं परिवृद्धपूरां
वाञ्छामि गाहितुमहं मृगतृष्णिकायाम् ॥ १५ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये रजनीयापनोक्तिपद्धतिः सप्तत्रिंशी ।

---

## अष्टत्रिंशी पद्धतिः ।

नीरन्ध्रमुक्तशरपीडितमानसाना-
मेणीदृशामकरुणेन मनोभवेन ।
विश्लेषसुप्तिविषयाणि निशाविरामे
जातानि यानि चरितानि वदामि तानि ॥ १ ॥
निद्रावतीं गिरिजया कृतदेहसंधि-
रप्याजगाम विधुरां स्वयमिन्दुमौलिः ।
अप्यन्ययोषिदुपधानपदे निरुद्धे
पत्न्या ध्रुवं प्रभुजनो भजतेऽन्यनारीम् ॥ २ ॥
वामे विधौ भवति बन्धुजनोऽपि वैरी
सुप्तां कथंचिदपि जीवसखीं निशान्ते ।
मूर्छाभयाद्विरहणीं प्रतिबोधयन्ती
विच्छित्तिमाशु विदधे हरसंगमस्य ॥ ३ ॥
लाभ परार्थमपरत्र नयेद्विधाता
सुप्त्यागते विधुरया गिरिशे कथाचित् ।

गाढोपगूहनविधेरसकृत्कृतस्य
पार्श्वोपधानमभवत्सहसैव पात्रम् ॥ ४ ॥
रोमाञ्चितैरवयवैः स्फुरिताधरेण
किंचिद्विवल्गनवता च कुचद्वयेन ।
ज्ञात्वा सखी हरसमागमनं चरन्तीं
निद्रां स्वकीयहरनिर्वहणां ननन्द ॥ ५ ॥
काचेत्कथंचन निशाविरतिप्रसुप्त्या
संमीलिताक्षियुगलापि शिवं ददर्श ।
या पुण्डरीकवदना च मृगायताक्षी
तस्यां विरुद्धचरितास्पदतापि युक्ता ॥ ६ ॥
साक्षात्कृते पशुपतौ न कदापि शोच्या
जायेत मीलनदशा नियतं नराणाम् ।
यद्दृष्टवद्गिरिशमह्नि तदायताक्ष्या
यत्नं विनैव निशि मीलितमक्षियुग्मम् ॥ ७ ॥
जातप्रबोधजनलभ्यनिजानुभूतिं
सुप्त्यैव काप्यनुबभूव शिवं वियुक्ता ।
स्नेहः शिवे यदि भवेदमितो नराणां
मार्गेण सिध्यति निकर्षवतापि शंभुः ॥ ८ ॥
यत्सुप्तिभङ्गकरणं स्मृतिभिर्निषिद्धं
तन्नैव सर्वविषयं विरहार्तलक्ष्यम् ।
सख्या प्रभातमिति कापि निबोधयन्त्या
हा हन्त भञ्जितशिवानुभवा बभूव ॥ ९ ॥
उद्दिश्य कापि विधुरा गिरिशानुभूतिं
सुप्त्यैव लोचननिमीलनमाचकाङ्क्षे ।

तस्यास्तदेतदुचितं खलु येन सर्वे
पश्यन्ति तं शमधना विनिमीलिताक्षाः ॥ १० ॥
आलिङ्गनं किमथवाधरपानमस्य
मन्दस्मितं किमुत वा स्थितिरेव तूष्णीम् ।
अन्यक्रिया किमपि कापि सखीमपृच्छ-
त्स्वप्नागतेन गिरिशेन रतिं चिकीर्षुः ॥ ११ ॥
सर्वोऽपि चौर्यमपरो वनितासु कुर्व-
न्कामी समीप्सति परस्य जनस्य सुप्तिम् ।
आश्चर्यमेतदचलेन्द्रसुताभयेन
यत्सुप्तयैव विदधे रसचौर्यमेव ॥ १२ ॥
योगप्रबुद्धहरिनाभिसरोजसृष्टौ
संभाव्यते न खलु मे गिरिजापरेण ।
सृष्ट्यन्तरं कुरु तदागमनप्रधानं
सुप्त्येति कापि नयनाम्बुरुहं ययाचे ॥ १३ ॥
वामभ्रुवां हरसमानयनाय निद्रा
नाभ्यर्थिता तदपि सैव तमाननीया ।
अभ्यर्थितापि विदधे न सखीति दृष्टं
किं कस्य केन फलमित्यतितर्क्यमेव ॥ १४ ॥
पार्श्वे तवेन्दुमुखि शंकरमानयामि
विश्वस्य मां नयनमीलनमाचरेति ।
स्वप्ने समागममनेन विबुध्य तन्व्या
निद्रावतीं प्रियसखी विदधे वियुक्ताम् ॥ १५ ॥
जाग्रत्स्वपक्षविपरीतविधानदक्षे
देव्यद्य मे नयनयोः क्षणमात्रमास्व ।

काम्यार्थसिद्धिरियतैव ममेति निद्रा-
　मन्तर्निगद्य विधुरा न च तल्पमाप ॥ १६ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये स्वप्नपद्धतिरष्टत्रिंशी ।

---

एकोनचत्वारिंशी पद्धतिः ।

संगत्य रात्रिविरतौ कथमप्यवाप्त-
　निद्राप्रसादसुलभेन महेश्वरेण ।
स्वप्नोपभोगमवदन्प्रमदाः प्रमोदा-
　त्सद्यो रहस्यभिमताय सखीजनाय ॥ १ ॥

स्वप्ने हरेण रतिमद्य विधातुमीष-
　त्सक्तस्त्वयास्तकृपया प्रतिबोधिताहम् ।
सुप्तिं व्रजेयमधुनास्य समागमाय
　भूयोऽपि नैव सखि मे प्रतिबोधिनी भूः ॥ २ ॥

आलिङ्गिताङ्गमभवं शशिभूषणेन
　स्वप्ने मया तु स पुनर्न गले गृहीतः ।
व्रीडावशस्तिमितया सखि हन्त पापा-
　न्नाज्ञासिषं किमिति सुप्तिविजृम्भितं तत् ॥ ३ ॥

स्वप्ने हरेण विहितेऽपि तथैव भोगे
　नासीत्क्षतं वपुषि मे सखि हा हतास्मि ।
यन्नैव दष्टमधरं न रतिक्षतस्य
　क्षेत्रं तदेवमुभयं फलहीनमेतत् ॥ ४ ॥

यः प्रस्थितो गतघृणः सखि चन्द्रमौलिः
　स्वप्नागतः प्रथममेव मयोपगूढः ।

वीथीगतो यदि भवेन्नपयाभिभूता
तस्याग्रतो नहि यथैव पुरा भवेयम् ॥ ५ ॥
सुस्वप्नदर्शनफलं भवति प्रबोधे
पश्चादिति स्म कथयन्ति तदन्यथापि ।
स्वप्ने शिवस्य निशि वीक्षणमालि जातं
तस्योपगूहनविधिं तदसूत सद्यः ॥ ६ ॥
स्वप्ने हरेण परिभोगरसेप्सुना मे
वासो गृहीतमिदमेव तदा विबुद्धम् ।
सख्यावयोरुपरि यानि विचेष्टितानि
ज्ञाता परं विषमसायक एव तेषाम् ॥ ७ ॥
यन्मे हरेण सह संगमसौख्यहेतो-
र्नेत्रं निमीलनदशां स्वयमाससाद ।
सोढा स्वयं विपदमार्त्यपहारकृत्यं
नेत्रोपमस्य चरिते किमुत स्वदृष्टेः ॥ ८ ॥
स्वप्नोपलम्भनदशा मम सैव नित्यं
भूयात्प्रजागरदशा सखि मा कदापि (?) ।
यस्यामवापमचलेन्द्रसुतैकशेषं
वक्षः प्रजागरसुदुर्लभमीश्वरस्य ॥ ९ ॥
स्वप्ने शिवः सुदति संप्रति देहि भिक्षा-
मित्यूचिवानहमदामविलम्ब्य तस्मै ।
नैवाददे न च गतः स्मितमेव चक्रे
दत्ता मयास्य तु गले दृढमङ्कपाली ॥ १० ॥
यो वीक्षितोऽहनि शिवो निशि सुप्तिलब्ध-
शय्यागृहं मयिरिरंसुरिवाससाद ।

दृष्ट्वा तमाशु गलता वसनांशुकेन
जारायितं चिरनितम्बनिषेविणा मे ॥ ११ ॥
आलम्ब्यमानवसना सकलेश्वरेण
मुञ्चेत्यवोचमपतच्छिथिलोऽस्य हस्तः ।
स्वप्ने सखि क्षणत एव हतो भुजो मे
जग्राह कण्ठमयमस्तदयस्तु तस्य ॥ १२ ॥

स्वप्ने हरेण सति निर्दयमारयुद्धे
लुप्तो न चन्दनरसः कुचयोरयं मे ।
नैवाधरेऽपि दशनक्षतमीक्ष्यते य-
ज्जाग्रद्रतादपि वरं सखि सुप्तिभोगः ॥ १३ ॥
आविस्मितेन गिरिशेन दृढाप्तलज्जा
निद्रागमे सखि गृहीतकराहमासम् ।
आमूलकण्टकितपङ्कजनालकल्प-
मद्यापि पश्य चरितार्थमिदं प्रकोष्ठम् ॥ १४ ॥

रत्युत्सवाय मम लम्बितमीश्वरेण
वासो निशाविरतिसुप्तिसमागतेन ।
बोधेन तद्गलितमैक्ष्यत हन्त रन्तुं
सोऽयं पुरा न खलु तिष्ठति चन्द्रमौलिः ॥ १५ ॥
निद्रैव जीवितसखी मम नैव सख्यो
यूयं मृषाप्रणयडम्बरमाचरन्त्यः ।
या दुर्लभं गिरिसुतावरमद्य दूरा-
दानीय मे शयनमध्यगतं चकार ॥ १६ ॥

निम्नीकृतस्तनयुगं विहितोपगूह-
स्वप्नागतेन यदहं परमेश्वरेण ।
तेनैव हारगलिताः सखि पश्य मुक्ताः
सत्यं भवत्यनृतमेव कृतं शिवेन ॥ १७ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये स्वप्नोक्तिपद्धतिरेकोनचत्वारिंशी ।

---

चत्वारिंशी पद्धतिः ।

स्वप्ने मुहूर्तमनुभूय पिनाकपाणिं
निःशेषलुप्तविरहव्यसना युवत्यः ।
तेनैव नित्यमपि सेवितयौवनाया
गौर्याः प्रशस्तिगिरमात्मगतां शशंसुः ॥ १ ॥

सा शैलराजतनया वनितासु वर्या
यालभ्य रूढिसुलभे विरहे हरेण ।
पादोदकायितजला मुहुरेव यस्या-
स्तन्मौलिदिव्यतटिनी पदयोर्निपत्य ॥ २ ॥

सा पार्वती स्तनवती भुवने वृथान्याः
क्लेशावहा युवतयः स्तनमुद्वहन्त्यः ।
यस्याः पयोधरयुगेन मनोजशत्रो-
र्वक्षःस्थलेऽपि विहिता रतिमर्दमुद्रा ॥ ३ ॥

सा राजते जगति शैलसुता वधूनां
या जायते हरगलग्रहणोत्सवेषु ।
आनन्दनिर्भरतया मुकुलीकृताक्षी
मोहं [illegible] ॥ ४ ॥

सैवोत्तमा जगति पर्वतराजपुत्री
पीत्वा यदीयमधरामृतमिन्दुमौलिः ।
आत्मीयमप्रतिमृदुः सह कालकूट-
क्ष्वेडोष्णतापमखिलं शमयांचकार ॥ ५ ॥

सा पार्वती विजयतां भुवनस्य माता
स्थेमानमाजगतमङ्गलभूषणस्य ।
निश्चित्य या गतभया विदधेऽभ्यनुज्ञां
भर्त्रा कृतस्य गरलाशनसाहसस्य ॥ ६ ॥

सौभाग्यजन्मवसतिः किल शैलकन्या-
कामाभिभूत्युचितमस्य····संविधातुम् ।
कण्ठे मुहुर्मदनशत्रुमपेतशङ्का
वध्नाति यानि भुजगद्वयशृङ्खलेन ॥ ७ ॥

सा राजते जगति पर्वतराजपुत्री
संभोगकेलिकलहे बहुशः प्रवृत्ते ।
ईशस्य मौलिपरितः परिपूर्णचन्द्रो
यूनां पुराश्रिकपणा कृशमेवमासीत् ॥ ८ ॥

सा पार्वती विजयतां जगदेकमाता
यस्या विहारकलहे सुलभे हरेण ।
पादाम्बुजाश्रयणकाङ्क्षितयैव तस्य
प्रागेव मौलिकुसुमान्मधुपाः श्रयन्ते ॥ ९ ॥

तप्तं तयैव हि तपो गिरिराजपुत्र्या
यस्या पिपास····ममे परमेश्वरेण ।
हस्ता····हो न मनगेव कृतः कृतोऽभू-
द[illegible] ॥ १० ॥

सा पार्वती जगति भाग्यवती वधूनां
या रुष्टपार्थदृढमुष्टिनिपातपीडाम् ।
सद्यो जहार गिरिशोरसि घट्टितेन
कामोष्मणेन(व) कुचपुट्टलिकद्वयेन ॥ ११ ॥

धन्या गिरीन्द्रतनया खलु यद्भवेन
संध्याप्रणामसमये स पिनाकपाणिः ।
एवं निमीलति सरोरुहमद्य पश्य
गौरीत्युदीर्य करमीलनमातनोति ॥ १२ ॥

सा नायिका विजयतां प्रणयेन रुष्टा
या साकनाय(?) विनतस्य पुरार्दनस्य ।
प्रद्योतिताम्भसि कपर्दसुरस्रवन्त्यां
बाष्पैरपूर्वसरितं पुनरातनोति ॥ १३ ॥

तां पार्वतीमनिशमेव सदा स्मरेव
संध्याप्रणामसमये परमेश्वरस्य ।
कोपेन यारुणतनुच्छविराजभूत्वं
निर्यात्पुनः परिणता स्वयमेव संध्या ॥ १४ ॥

सौभाग्यजन्मवसतेर्गिरिराजपुत्र्याः
कुर्मस्तयोश्चरणयोरसंक्रन्नमस्याम् ।
नित्यं ययोः स्वयमलक्तकसंनिधित्सो-
श्चेटीजनेन सुलभः कलहः शिवस्य ॥ १५ ॥

दाक्षायणीचिरसमीप्सितलाभहेतो-
र्विद्यासमस्तयुवतीस्पृहणीयवृत्त ।

उन्मत्तवृत्तिरपि यत्सहचारसक्त्या
शंभुर्जगत्त्रयगरिष्ठकुसुम्बधुर्यः ॥ १६ ॥

नित्या हि सा भगवती गिरिराजकन्या
नम्रस्य केलिकलहेषु नवेन्दुमौलेः ।
मन्दाकिनीशिरसि या पदयावकेन
संध्यायमानसलिलामसकृत्करोति ॥ १७ ॥

सा पार्वती जगति विभ्रमजन्मभूमि-
र्या याचते स्म गिरिशं(?) सुरसंघमध्ये ।
यन्मे व्यलीकमभवन्मदनाङ्गदाहा-
त्तत्क्षम्यतामिति करग्रहणच्छलेन ॥ १८ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये गौरीप्रशंसापद्धतिश्चत्वारिंशी ।

समाप्तमिदं काव्यम् ।

